मेधा प्रतिपादिता । प्रतिभानवान् = प्रत्युत्पन्नमतिशाली, सर्वलोकप्रियः = सकलजनरञ्जकः । शत्रुरपि रामाचरणेन मुदितो भवति, का कथा मित्रस्य । अर्थाद्-हरधनुर्भङ्गानन्तरं सत्वरमागतस्य प्रकृतिकोपनस्य परशुरामस्यापि रामोपरि तावत्कालमेव कोप आसीद्, यावत् तेन सहालापो न जातः, अत एवालापानन्तरं रामपराक्रमं विदित्वा परशुरामोऽपि शान्तस्वान्तोऽभूत् । साधुः = सज्जनः, मधुरस्वभावः । अदीनात्मा = सदोत्साहयुक्तः, विचक्षणः = लब्धवर्णः, पण्डितः । अस्ति ।

समासादि—सर्वाणि च तानि शास्त्राणीति सर्वशास्त्राणि, तेषामर्था अभिप्रायाः सर्वशास्त्रार्थाः, तत्त्वं जानातीति तत्त्वज्ञः, सर्वशास्त्रार्थाणां तत्त्वज्ञ इति सर्वशास्त्रार्थतत्त्वज्ञः । स्मृतिधर्मसंहिताऽस्यास्तीति, वा-स्मृतिः स्मरणशक्तिरस्यास्तीति स्मृतिमान्, प्रतिभानं प्रतिभाऽस्यास्तीति प्रतिभानवान् । सर्वे च ते लोका इति सर्वलोकास्तेषां प्रिय इति सर्वलोकप्रियः । न दीन इत्यदीनः, अदीन आत्मा यस्य सोऽदीनात्मा ।

वाच्यान्तरम्—सर्वशास्त्रार्थतत्त्वज्ञेन रामेण भूयते ।

कोषः—'स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः' इत्यमरः ।

'महाकुलकुलीनार्यसभ्यसज्जनसाधवः' इत्यमरः ।

'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः ।

सारार्थः—स च सकलशास्त्राभिप्रायलक्ष्यज्ञः, स्मरणशक्तिशाली, प्रतिभासमन्वितः, सकलजनानन्ददः, सज्जनः, अकार्पण्यप्रकृतिः, प्राज्ञश्चास्तीति ।

भाषाऽर्थः—सब शास्त्रों के तत्त्व को समझने वाले, स्मरणशक्तिवाले, और प्रतिभाशाली, सब लोगों के प्रिय, और परम सज्जन, उत्साह से भरे हुए, और अच्छे विज्ञानी भी हैं ॥१५॥

सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ १६ ॥

अन्वयः—समुद्रः, सिन्धुभिः, इव, 'स रामः' सर्वदा, सद्भिः, अभिगतः, ( तथा ) आर्यः, सर्वसमः, एव, च पुनः, सदैव, प्रियदर्शनः, अस्ति ।

व्याख्या—समुद्रः = सागरः, सिन्धुभिः = सरिद्भिः, इव, (स, रामः,) सर्वदा = होमदेवपूजासभाऽधिष्ठानकालेषु, सद्भिः = सात्त्विकजनैः, गुर्वमात्यपुरोहितैः, अभिगतः = संगतः, वा-सर्वदा = सदा, सद्भिः = साधुभिः, अभिगतः = सेवितः, आर्यः = सर्वपूज्योऽपि, सर्वसमः = वैषम्यरहितः, यथैवान्यः स्वपरिवारस्तथैवासावपि। सदैव = शश्वत्, प्रियदर्शनः = प्रसन्नरूपः, न कदाचित् खिन्नचित्तो भवतीति । अनेन हरधनुर्भङ्गानन्तरं सहसाऽऽगतं कोपप्रज्वलितं परशुराममपि विलोक्य रामस्य क्षोभहीनत्वं सुचितम् ।

समासादि—सर्वैः सम इति सर्वसमः । प्रियं दर्शनं यस्य स प्रियदर्शनः ।

व्याकरणम्—अभिगतः = अभि + गम् + क्तः ।

वाच्यान्तरम्—सर्वदाऽभिगतेन…रामेण भूयते ।

कोषः—"सर्वदा सदा" इत्यमरः ।

'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' इत्यमरः ।

'सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ।

'आर्यः पूज्यः कुलीनोऽस्त्री' इति कोषः ।

सारार्थः—यथा सदा नदीभिः समुद्रः संयुतो वर्त्तते, तथैव रामोऽपि बहुभिर्मन्त्रिप्रधानप्रभृतिभिर्वेष्टितः शोभते, न कदाऽप्येकाकी कमप्यर्थं विचारयति, स्वयं सर्वोत्कृष्टोऽपि सकलसाधारणवत्सरलचित्तः, दुःखोचितसमयेऽपि प्रसन्न एव विद्यत इति ।

भाषाऽर्थः—जैसे समुद्र नदियों से सब दिन मिला रहता है, वैसे ही रामचन्द्रजी भी सज्जन

महात्माओं से सम्मिलित रहते हैं, और परम पूज्य होने पर भी सकल साधारण के ऐ
सरल स्वभाव, और सदा प्रसन्न रहते हैं ॥ १६ ॥

**स च सर्वगुणोपेतः कौशल्याऽऽनन्दवर्धनः ।**
**समुद्र इव गाम्भीर्ये, धैर्येण, हिमवानिव ॥ १७ ॥**

अन्वयः—सः (रामः) च, सर्वगुणोपेतः, कौशल्याऽऽनन्दवर्धनः, गाम्भीर्ये, समुद्रः, इ धैर्येण, हिमवान्, इव, वर्त्तते ।

व्याख्या—सः = प्रसङ्गवर्णनीयो रामः, च, सर्वगुणोपेतः = सकलोक्तानुक्तगुणालङ्कृतः, कौ शल्याऽऽनन्दवर्धनः = निजजननीहर्षजनकः, अनेन ससीतस्य रामस्यायोध्यायामागमनं सूचि तम् । अलौकिकरूपगुणवत्या नववध्वाः सीताया दर्शनेन परिणतवयस्कायाः कौशल्याया श्वश्र्वा आनन्दाधिक्योदयः स्वाभाविक एव, एकं तद्दिनमासीद्यत्र पुत्रोत्पत्तेः सर्वथा नैराश्य म्, अद्य तु तद्दिनं, यत्र सवधूकपुत्रमुखदर्शनं जातमतस्तद्युक्तमेव । तथा च कौशल्याऽऽनन्द वर्धन इत्यनेन पितुरपेक्षया मातुः(१)पुत्रोत्पत्तावानन्दातिशयो भवतीति सूचितम् । गाम्भीर्ये गभीरत्वे, समुद्रः = सागरः, इव, यथैव स्वान्तर्वर्त्तिविविधरत्नजालं नानाशुभाशुभवस्तूनि समुद्रः स्वकीयागाधे हृदयतले रक्षति, तथैवायं रामोऽपि स्वेषां परेषामपि गोपनीयं समाच रसमूहं गोपयति, न साधारणबाल इव बालत्वसुलभचाञ्चल्ययुक्त इति भावः । धैर्येण = धृत्य हिमवान् – हिमालयः, तुषारपर्वतः, इव, वर्त्तते, यथाऽनिशमतुलैः पतितैस्तुहिनैः स च गि रव्यथो निर्विकारश्च दृश्यते तथैवायं रामोऽपि प्रत्युपस्थितैः कठिनकार्यशतैः स्वशिरसि व मानैर्निर्विकारो लक्ष्यते, अनेन राज्याधिरोहणयोग्यता सूचिता ।

समासादि—सर्वे च ते गुणाः सर्वगुणास्तैरुपेतः संयुत इति सर्वगुणोपेतः । आनन्दं बर्ध तीत्यानन्दवर्धनः, कौशल्याया आनन्दवर्धन इति कौशल्याऽऽनन्दवर्धनः ।

वाच्यान्तरम्—सर्वगुणोपेतेन रामेण भूयते ।

कोषः—'स्यादानन्दथुरानन्दः शर्मशातसुखानि च' इत्यमरः ।
'हिमवान् हिमशैलस्तु प्रालेयाद्रिर्हिमालयः' इत्यमरः ।

सारार्थः—सकलसद्गुणालङ्कृतो निजजननीमोदकरोऽसौ रामः समुद्र इव गम्भीरो हि मालय इव धैर्यवानस्ति ।

भाषाऽर्थः—वह रामजी हर एक गुणों से भरे हुए, कौशल्या (अपनी माय) के हर्ष बढ़ाने वाले, समुद्र के सदृश गम्भीर हैं; अर्थात् जैसे समुद्र का थाह कोई नहीं पाता, वै रामजी के हृदय का भी गुप्तविचार कोई नहीं जान सकता, और धैर्य में हिमालय के सम हैं; अर्थात् जैसे हर समय वर्फ से पीड़ित होने पर भी हिमाचल तिल भर नहीं डोलता, वै अनेक कार्य भार से रामजी भी नहीं हिचकते ॥ १७ ॥

**विष्णुना सदृशो वीर्ये, सोमवत्प्रियदर्शनः ।**
**कालाग्निसदृशः क्रोधे, क्षमया पृथिवीसमः ॥ १८ ॥**

अन्वयः—वीर्ये, विष्णुना, सदृशः, सोमवत्, प्रियदर्शनः, क्रोधे, कालाग्निसदृशः, क्षमय पृथिवीसमः, अस्ति ।

व्याख्या—वीर्ये = विक्रमे, युद्धाद्यवसरे प्राप्ते सतीत्यर्थः । विष्णुना = नारायणेन, सदृश समः, यथा ये येऽन्यदेवजयिनो दैत्यास्ते ते विष्णुनैव नाशितास्तथैव सकलदेवदुर्जया अ

(१) तथैवोक्तं भारतीयानुशासनपर्वणि ३४ अध्याये—
स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै ।
तस्माच्च शक्रे ! जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥ ४० ॥

दानवा रामेण पराजिता भवन्ति । सोमवत् = चन्द्रवत्, प्रियदर्शनः = नयनाकर्षकः, यथैवान्यप-दार्थावलोकनाभिलाषवानपि जनः प्रमादेनापि नयनगोचरीभूतं प्रतिदिनदृष्टमपि चन्द्रबिम्बं क्षणं पश्यत्येव, तथैव दृष्टरामचन्द्रेणापि जनेन रामो भूयः सादरमेवालोक्यत इति भावः। क्रोधे = क्रोधावसरे, युद्धादौ, कालाग्नितुल्यः = प्रलयानलसदृशः, यथा प्रलयसमये वन्हिः परितो युगपद् ज्वलज्ज्वालाजालैर्भूस्थान् पदार्थान् भस्मीकरोति, तथैवायं रामोऽपि परितो मोचितैर्बाणैः प्रतिपक्षिणं क्षणेनैव नाशयति । क्षमया = शान्त्या, पृथिवीसमः = धरणीसदृशः । यथा पृथिव्यां लोकाः स्वसुखसिद्ध्यै कर्षणखननचलनाद्युपद्रवान् कुर्वन्ति, परन्तु ज्ञात्वाऽपि तान् सा न कमपि प्रतीकारं कर्त्तुमिच्छति, प्रत्युत स्वव्यथामपि न प्रकटीकरोति, तथैव सदाऽयं रामोऽपि स्वसुखनिरपेक्षः परसुखलाभाय सहनशीलः सन् वर्तते ।

समासादि—प्रियं दर्शनमवलोकनं यस्य सः । कालस्य प्रलयसमयस्य, अग्निः कालाग्निः, कालाग्निना सदृश इति कालाग्निसदृशः । पृथिव्या समः पृथिवीसमः ।

वाच्यान्तरम्—वीर्ये विष्णुना सदृशेन, सोमवत्प्रियदर्शनेन, क्रोधे कालाग्निसदृशेन, क्षमया पृथिवीसमेन ( रामेण ) भूयते ।

कोषः—'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इत्यमरः ।
'वाच्यलिङ्गसमस्तुल्यः सदृक्षः सदृशः समः' इत्यमरः ।
'वीर्यं बले प्रभावे च' इत्यमरः ।
'अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः ।
'शान्तिः क्षमा तितिक्षा च' इत्यमरः ।
'गोत्रा कुः पृथिवी पृथ्वी क्षमाऽवनिर्मेदिनी मही' इत्यमरः ।

सारार्थः—विष्णुसमः पराक्रमे, दर्शने चन्द्रवदाह्लादकः, क्रोधे प्रलयाग्निरिव सर्वध्वंसकः, शान्तौ पृथ्वीसमोऽस्ति ।

भाषाऽर्थः—वह पराक्रम में विष्णु के समान, देखने में प्रिय चन्द्रमा के ऐसे, क्रोध के समय प्रलयकाल के अग्नि के बराबर, और सहनशीलता में पृथिवी के समान हैं ॥ १८ ॥

**धनदेन समस्त्यागे, सत्ये धर्म इवापरः**

अन्वयः-त्यागे, धनदेन, समः, सत्ये, अपरः, धर्मः, इव, (स हि रामो विद्यत इति शेषः)।

व्याख्या—त्यागे = धनवितरणे दाने, धनदेन = कुबेरेण, समः = सदृशः, समानः, सत्ये = सत्यव्यवहारे, अपरः = द्वितीयः, धर्मः = धर्मराजः, इव, रामस्तु देहधारी धर्म इव, तथोक्तम् "रामो विग्रहवान् धर्मः" इति। वा-असत्ये = असत्यपालके जने, अपरः, अधर्म इव = क्रूर इव, अर्थात् पापिनां दण्डदाने महानदयः, एतत्पर्यन्तमेव बालकाण्डीया कथा वर्त्तते, अतः परमयोध्याकाण्डस्य कथाऽस्ति ।

समासादि—धनं ददातीति धनदस्तेन ।

वाच्यान्तरम्—त्यागे धनदेन समेन, सत्येऽपरेण धर्मेणेव, तेन रामेण भूयते ।

कोषः—'मनुष्यधर्मा धनदो राजराजो धनाधिपः' इत्यमरः ।
'त्यागो विहापनं दानमुत्सर्जनविसर्जने' इत्यमरः ।
'सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति' इत्यमरः ।
'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः ।

सारार्थः—स रामः कुबेर इव दानशीलः, शरीरी धर्म इव सत्यप्रयोक्ताऽस्तीति ।

भाषाऽर्थः—'वह रामचन्द्र,' दान में तो राजराज कुबेर के समान और सत्य-व्यवहार में साक्षाद् दूसरे धर्म ही हैं ।

इति बालकाण्डकथा ।

# अथायोध्याकाण्डकथाबीजम् ।

तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ॥ १९ ॥
ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हितैर्युक्तं, प्रकृतिप्रियकाम्यया ॥ २० ॥
यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ।

अन्वयः—महीपतिः, दशरथः, सत्यपराक्रमं, ज्येष्ठं, ज्येष्ठगुणैः, युक्तं, प्रकृतीनां, हि युक्तं, एवं, गुणसम्पन्नं, प्रियं, सुतं, तं, रामं, प्रकृतिप्रियकाम्यया, प्रीत्या, यौवराज्येन, सं क्तुम्, ऐच्छत् ।

व्याख्या—महीपतिः = सकलपृथ्वीपालकः, भूपः । दशरथः = एतन्नामकः, सत्य क्रमम् = अव्यर्थविक्रमम् , (१) ज्येष्ठम् = चतुर्ष्वपि भ्रातृषु पूर्वजम् , ज्येष्ठगुणैः = सर्वश्ला गुणैः, युक्तम् = सहितम्, प्रकृतीनां = प्रजानां, हितैः = कल्याणकरोपायैः, युक्तं = साहत एवं = पूर्वोक्तवर्णनानुसारं, गुणसम्पन्नम् = शौर्यौदार्यगाम्भीर्यादिपूर्णम् , प्रियम् = प्रेमपा सुतम् = पुत्रं, तं = पूर्वोक्तं, रामम् = एतन्नामकम् , प्रकृतिप्रियकाम्यया = अमात्यादिजनप्रि करणेच्छया, अनेन 'रामो राजा भवतु' इति प्रजाऽभिलाषः सूचितः । प्रीत्या = स्वप्रीत्य यौवराज्येन = नवभूपतित्वेन, संयोक्तुम् = संयोजयितुम् , ऐच्छत् = अभिलषितवान् ।

समासादि–गुणैर्दयादाक्षिण्यादिभिः सम्पन्न इति गुणसम्पन्नस्तम् । सत्यः पराक्रमो तम् । ज्येष्ठाः श्रेष्ठाश्च ते गुणा इति ज्येष्ठगुणास्तैः, वा—ज्येष्ठानां पूर्वजोचितानां गुणा तैः । दशसु दिक्षु रथोऽप्रतिहतो यस्य स दशरथः । प्रियस्य काम्या प्रियकाम्या, प्रकृ प्रियकाम्या प्रकृतिप्रियकाम्या तया । युवा चासौ राजा युवराजस्तस्य भावो यौवराज्य यौवराज्येन । मह्याः पृथिव्याः पतिर्महीपतिः ।

व्याकरणम्—सम्पन्नं = सम् + पद् + क्तः । युक्तम् = युज् + क्तः । ऐच्छत् = इष् + ल

वाच्यान्तरम्—दशरथेनैवं गुणसम्पन्नः सुतो रामो यौवराज्येन संयोक्तुमैष्यत ।

कोषः—'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे ।
छन्दःकारणगुह्येषु जन्मामात्यादिमातृषु' इति वैजयन्ती ।

सारार्थः—दशरथ एवं सकलसद्गुणगणालङ्कृतं ज्येष्ठपुत्रं राममामात्याद्यनुरोधेन, स हार्देन च यौवराज्येन संयोजयितुमभिलषितवान् ।

भाषाऽर्थः—महाराज दशरथजी ने, दृढ़प्रतिज्ञ, और सब पुत्रोंमें बड़े, बड़ों के सब गु भूषित, प्रजाओं के उपकार में तत्पर, ऐसे पहले कहे हुये गुणों से अलंकृत प्यारे पुत्र रामचन को मन्त्रियों के अनुरोध से और अपने विचारसे भी युवराज बनाने के लिये चाहा ॥१९

तस्याभिषेकसंभारान् दृष्ट्वा भार्याऽथ कैकयी ॥ २१ ॥
पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२ ॥

अन्वयः—अथ, पूर्वं, दत्तवरा, भार्या, देवी, कैकयी, तस्य, अभिषेकसंभारान्, दृष्ट्वा, स्य, विवासनं, भरतस्य, अभिषेचनं, च, एनं, वरम् , अयाचत ।

व्याख्या—अथ = अनन्तरम् , पूर्वं = प्रथमं, दत्तवरा = अर्पिताभिलाषा, पूर्वस्मिन् इन्द्रसहायार्थं प्रवृत्तस्य दशरथस्य दैत्यैर्युद्धे जाते, दैत्यप्रयुक्तामासुरीमायां धवलाङ्गमुनिद

(१) सर्वज्येष्ठो रामस्तदनुजो भरतः, तदनुजो लक्ष्मणः, तदनुजः शत्रुघ्न एवं जन्मक्रमस्तेषाम् ।

विद्यया निवारयित्र्यै कैकेय्यै, तुष्टेन दशरथेन दत्तौ वराविति कथाऽस्ति । भार्या = भर्तृयो- ग्या, जाया । कैकयी = एतन्नामिका, दशरथस्य राज्ञः (१) कनीयसी स्त्री, कुत्रचिद् मध्यमा स्त्री- त्युक्तं तत्र । तस्य = रामस्य, अभिषेकसंभारान् = राज्याभिषेकोपकरणादि, दध्यक्षतदूर्वाच्छ- त्रचामरादीनीति यावद् । दृष्ट्वा = मन्थराचेटीवचनापदेशात् स्वार्थान्धनयनेन विलोक्य, तथा सञ्जाते स्वार्थहानिं विचिन्त्य, स्वार्थसंसाधनाय पूर्वस्वीकृतवरद्वयं स्मृत्वा, प्रसन्ना भूत्वा, रामस्य = यौवराज्यार्थमुद्योजितस्य, विवासनम् = राज्यादुद्वासनम् , "रामश्चतुर्दश वर्षाणि राज्यं विहाय वने गच्छतु" इत्येवमेकम्, तथा-भरतस्य = एतन्नामकस्य निजात्मजस्य, त- त्काले मातामहनगरस्थस्य । अभिषेचनं = राज्याभिषेचनमित्येव द्वितीयं, वरम् = मनोरथम् , पुनं = दशरथं प्रति, अयाचत = अर्थिवती ।

समासादि—केकयस्य केकयदेशानां राज्ञोऽपत्यं स्त्री चेत् कैकयी । अभिषेकस्य संभारा- अभिषेकसंभारास्तानभिषेकसंभारान् । दत्तावर्पितौ वरौ यस्यै सा दत्तवरा ।

व्याकरणम्—दृष्ट्वा = दृश् + क्त्वा.। अयाचत = याच् + लङ् ।

वाच्यान्तरम्—कैकय्या एष दशरथो वरमयाच्यत ।

कोषः—'अभिषेकोऽभिषेचनम्' इति कोषः ।

'निष्कासनं निर्गमनं निष्क्रमणं विवासनम्' इति कोषः ।

सारार्थः—स्वपरिचारिकाया मन्थराया उक्त्या रामस्य राज्याभिषेकोत्सवं श्रुत्वा, तस्या- स्त्वाग्रहेण परिवर्त्तितमतिः सा भरतमाता कैकयी रामे भूमिपतौ सति, स्वपुत्रस्य भूपतित्वा- भावेन पुत्रस्नेहवशीभूता, तत्क्षणे पूर्वप्रवृत्तशम्बरसमरोपकृतिकरणोपार्जितौ दशरथाद्वरौ स्मृ- त्वा तयोरेकं "रामस्य चतुर्दशवर्षावधि वनवासः" इति द्वितीयं तु "मत्पुत्रो युवराजो भव- त्विति, स्वपतेः सकाशाद् याचितवतीति ।

भाषाऽर्थः—इसके बाद पहले जिस महाराज दशरथ से दो वर मिल चुके थे ऐसी उनकी छोटी रानी केकयी ने ( अपनी लौंडी मन्थरा के बार बार मन बहकाने वाली बातों से ) उन रामजी के लिये राज्याभिषेक की सामग्री (दही-अक्षत-दूर्वा-छत्र-चामरादिक को) देख कर, ( तुरत कभी पहले देवासुर संग्राम में अपने पति से पाये दो वरों को याद कर उसमें से ) एक से 'राम को ( चौदहवर्ष ) वनवास, और दूसरे से 'अपने पुत्र भरत को राज्य, ये दो वर उन ( महाराज दशरथ ) से मांगती भई ।

यहां परम्परा से यह कथा है कि एक समय देवता के तरफ से दानवों से दशरथ लड़ते थे, उस समय दशरथ के ऊपर आसुरी माया फैलती हुई देख कैकेयी ने खुद दानवों से लड़कर माया को नष्ट कर दिया, और अपने पति को बचाया, तब खुश होकर दशरथ ने दो वरदान दिये, जो पहिले के बाकी ही थे ॥ २१ ॥ २२ ॥

**स सत्यवचनाद्राजा धर्मपाशेन संयतः ।**
**विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३ ॥**

अन्वयः—सत्यवचनाद् , धर्मपाशेन, संयतः, सः, राजा, दशरथः, प्रियं, सुतं, रामं, वि- वासयामास ।

व्याख्या—सत्यवचनात् = सत्यभाषणव्रताद् , यद्वदति तत्करोत्येवं नियमाद् , धर्मपाशे-

---

(१) तथा चोक्तं बा० का० १६ सर्गे—पायसदानक्रमेण ज्येष्ठकनिष्ठत्वम् ।
एवञ्च शृङ्गिवेरपुरे सुमन्त्रप्रत्यावर्त्तनसमये रामोक्तिः—

'नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ।
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः' ॥ इति ।

एकत्र कुत्रचिद् 'मध्यमाऽम्बा' इति वर्त्तते, परन्तु तत्रैतत्स्त्रीत्रितयेतरसाधारणस्त्रीजनापेक्षयोक्तमिति ।

न = पूर्वाङ्गीकृतवरदानद्वयदाम्ना, संयतः = गाढं नियन्त्रितः, सः = रामाभिषेकविघ्नप्रह
मूर्च्छितः, राजा = असमर्पितरामराज्यभारः, वा-सर्वरञ्जको दशरथः, प्रियं = प्राणेभ्यो
प्रेमभाजनं, सुतं = पुत्रं, रामं = भरताग्रजं, विवासयामास = प्रस्थापयामास ।

समासादि--सत्यं तथ्यं च तद्वचनं, सत्यवचनं तस्मात् । धर्म एव पाशो धर्मपाशस्
धर्मपाशेन ।

व्याकरणम्--संयतः = सम् + यम् + क्तः । विवासयामास = वि + वस् + णिच् + लिट्

वाच्यान्तरम्—राज्ञा दशरथेन रामो विवासितः ।

कोषः--"नियन्त्रितः संयतः स्याद्" इति ।

सारार्थः--राजा दशरथः, पूर्वाङ्गीकृतवचनपालनार्थं, धर्मरक्षणपरवशो भूत्वा प्राणप्रिय
पुत्रं वनं प्रेषितवान् ।

भाषाऽर्थः—सत्य वचन पालन करने के कारण, धर्म रूप फांस से जकड़े हुए उस रा
दशरथ ने प्यारे पुत्र राम को वन भेजा ॥ २३ ॥

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ २४ ॥

अन्वयः—वीरः, सः, ( रामः ) कैकेय्याः, प्रियकारणात्, पितुः, वचननिर्देशात्, प्र
ज्ञाम्, अनुपालयन्, "सन्" वनं, जगाम ।

व्याख्या—वीरः = विरोधिविध्वंसकोऽपि, सः = रामः, कैकेय्याः = कनीयस्याः, विमा
प्रियकारणात् = प्रीतिहेतोः, अर्थाद्—'भवत्याः पुत्रो भरत एव राजा भवतु, तथा चाहं व
गच्छामि, एवमेव चेद्भवती मुदिता भविष्यति, तर्हि भवतु, पुत्रेण मातुरानन्दकरं कर्म
कर्त्तव्यम्' इति हेतोः पितुः = दशरथस्य, वचननिर्देशाद् = आज्ञातः, प्रतिज्ञां = कैकेय
स्कृतां, सन्धाम् । अनुपालयन् = संपूरयन्, 'सन्' वनं = विपिनं, जगाम = ययौ ।

समासादि—वचनस्य निर्देशो वचननिर्देशस्तस्माद् वचननिर्देशात् । प्रियस्य कारणं
कारणम्, तस्मात्प्रियकारणात् ।

व्याकरणम्—जगाम = गम् + लिट् । अनुपालयन् = अनु + पाल् + णिच् + शतृ ।

वाच्यान्तरम्—तेने वीरेण वनं जग्मे ।

कोषः—'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः ।
'विरोधिध्वंसने दक्षो वीर इत्यभिधीयते' इति कोषः ।

सारार्थः—कैकेय्याः प्रियकरणहेतवे बद्धवाक्यस्य दशरथस्याज्ञया 'अवश्यमहं च
समा वने वत्स्यामि' इति प्रतिज्ञां पालयन् रामो वनं जगामेति ।

भाषाऽर्थः—वीरवर वह रामचन्द्र, कैकेयी के प्रसन्नता का कारण स्वरूप, ( उसके
बन्धन में पड़े हुए ) पिता की आज्ञासे ( 'अवश्य मैं वन में रहूँगा' इस ) प्रतिज्ञा को प
करते हुए वन में गये ॥ २४ ॥

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसम्पन्नः सुमित्राऽऽनन्दवर्धनः ॥ २५ ॥
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ।

अन्वयः—भ्रातुः, दयितः, प्रियः, विनयसम्पन्नः, सुमित्राऽऽनन्दवर्धनः, भ्राता, लक्ष्म
सौभ्रात्रम्, अनुदर्शयन्, व्रजन्तं, तम्, भ्रातरं, स्नेहाद्, अनुजगाम, ह, ।

व्याख्या—भ्रातुः = रामस्य, दयितः = इष्टतमः, प्रियः = नित्यं रामविषयकप्रीतिमा
विनयसम्पन्नः = नम्रताऽन्वितः, अनुद्धतः । सुमित्राऽऽनन्दवर्धनः = निजजननीमोदव

अर्थाद्-लक्ष्मणो रामेण सह वनं गच्छतीति श्रुत्वा सुमित्राया आनन्द एव संवृद्धः, यत उक्तं तया तदवसरे "रामं दशरथं विद्धि विद्धि मां जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात ! यथा सुखम्" इति । भ्राता = अनुजः, लक्ष्मणः = शत्रुघ्नाग्रजः, सौभ्रात्रम् = सुभ्रातृत्वम् , भ्रातृसौजन्यमिति यावद् । अनुदर्शयन् = आचरन् । व्रजन्तं = वनं गच्छन्तं, तं = पूर्वोक्तं, भ्रातरम् = अग्रजं, रामम् । स्नेहात् = प्रेमतः, नाहमेकाकी स्वजन्मस्थानमपि रामं विना सुखदं मन्ये, यत्रैव रामस्तत्रैव मम ग्राम इति धिया, अनुजगाम = अनुचरो भूत्वा-प्रस्थितः, ह = इति महत् सुप्रसिद्धम् । अग्रे रामस्तदनु सीता, तत्पृष्ठे लक्ष्मण एवं ते वनं गतवन्तः, अत एव रामोपासकाः स्वललाटे मध्ये रक्तवर्णां सीतारूपां चन्दनरेखां, तदुभयतः शुक्लवर्णे रामलक्ष्मणयो रूपबोधके रेखे, एवं तिलकं कुर्वन्ति । रामस्य कैकेयीकृतं वन-प्रस्थानं निशम्य क्रुद्धेन लक्ष्मणेन रामं प्रति महदभिन्नहृदयत्वं सूचितम् , पश्चाद् रामोपदे-शाच्छान्तो भूत्वाऽनुगमनमेव कृतवानिति तस्य सौभ्रात्रम् ।

समासादि—विनयेन सौशील्येन सम्पन्नः संयुक्त इति विनयसम्पन्नः । आनन्दं बर्धयती-त्यानन्दबर्धनः, सुमित्राया दशरथस्य मध्यमपत्न्या आनन्दबर्धन इति सुमित्राऽऽनन्दबर्धनः । शोभनो भ्राता सुभ्राता तस्य भावः सौभ्रात्रम् ।

व्याकरणम्—व्रजन्तम् = व्रज् + शतृ । अनुजगाम = अनु + गम् + लिट् । अनुदर्शयन् = अनु + दृश् + णिच् + शतृ ।

वाच्यान्तरम्—लक्ष्मणेन सोऽनुजग्मे ।

कोषः—'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्' इत्यमरः ।
'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ।
स्यादानन्दथुरानन्दः शर्मशातसुखानि च' इत्यमरः ।
'दयितः प्रिय इष्टश्चानुकूलोऽभिन्नमानसः' इति ।

सारार्थः-विनीतो रामप्रियो भ्रातृवत्सलो लक्ष्मणोऽनुकर्त्तव्यमनुपालयन्, वनं गच्छन्तमपि ज्येष्ठभ्रातरं रामं स्नेहादनुजगाम, वस्तुतो लक्ष्मणसमो भ्रातृभक्तो न कोऽपि जात इति ।

भाषाऽर्थः—बड़े भाई रामजी के प्रिय, तथा उनमें स्वयं प्रेम रखनेवाले, अत एव विनय से सम्पन्न, सुमित्रा के आनन्द को बढ़ाने वाले, छोटे भाई लक्ष्मणजी भ्रातृसम्बन्धी सुजनता को दिखाते हुये वन जाते हुए रामजी के स्नेह के कारण पीछे २ चले ॥ २९ ॥

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ २६ ॥
जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥ २७ ॥
सीताऽप्यनुगता रामं, शशिनं रोहिणी यथा ।

अन्वयः—रामस्य, दयिता, भार्या, नित्यं, प्राणसमा, हिता, जनकस्य, कुले, जाता, देव-माया, इव, निर्मिता, सर्वलक्षणसम्पन्ना, नारीणाम्, उत्तमा, वधूः, सीता, अपि, यथा, रोहिणी, शशिनम् , ( अनुयाति तथा ) रामम् , अनुगता ।

व्याख्या—रामस्य = वनवासश्रवणेनापि रमणीयाकारस्य, रामस्य । दयिता = प्रिया, समदुःखसुखेति यावत् । या स्वार्थिनी भवति, सा दुःखावस्थां गतं पतिं नानुचरति, इयं देवी राजप्रासादमपि निर्जनवनमिव परित्यज्य वनं गच्छन्तमपि पतिमनुप्रस्थितेति भावः। भार्या = भर्त्तुर्योग्या, यथा रामः साक्षात्परमेश्वरः, तथैवेयमपि परमेश्वरी साक्षादुभयोर्योग्यः समागमः। नित्यं = सदा, प्राणसमा = असुसदृशी, यथोक्तं सुन्दरकाण्डे 'न चास्य माता, न पिता, न चा-न्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा, इति । हिता = कल्याणकारिणी, न कदाऽपि पतिप्र-तिकूलव्यापारेति । जनकस्य = सीरध्वजस्य, कुले = वंशे, जाता = उत्पन्ना, जनितेति भावः ।

यद्यपीयमयोनिजा, तथाऽपि जनकस्य देवयज्ञावसरे लाङ्गलविदारिताया भूमेरुत्पन्ना, अतो न्मानुरूपं 'सीता लाङ्गलपद्धति'रित्युक्तत्वात् 'सीता' इति नामापि रक्षितं जनकेन । देवमाय देवनिर्मितमाया, इव = यथा, निर्मिता = रचिता, यथा देवदानवसमरे दैत्यनाशाय देवैर्मा निर्मीयते, तथैवेयं रावणवधाय रचितेति भावः । सर्वलक्षणसम्पन्ना = सकलसामुद्रिकोक्तपा व्रत्यसौभाग्यचिह्नसंपूर्णा, यथाऽऽदौ रामस्य गुणाः सामुद्रिकोक्ता उक्तास्तथैवास्या अप सन्निति भावः । नारीणाम् = स्त्रीणाम्, उत्तमा = मुख्या, स्वभावसौन्दर्यादिभिर्नैतत्स काऽपि तदानीमिति भावः । वधूः = नवविवाहिता, वा–दशरथस्नुषा, अनेन तदानीं सीताय अयोध्यायामेवोपस्थितिरुक्ता, ईदृशी । सीताऽपि = जानक्यपि, यथा = यद्वत्, रोहिणी = ता विशेषः, शशिनं = चन्द्रम्, अनन्ताकाशे भ्रमन्तमप्यनुयाति, न कदाऽपि तं जहाति, तथै सा । रामं = स्वपतिं, वनं प्रस्थितमपि । अनुगता = पृष्ठतः प्रस्थिता । तथोक्तम् "वरिष्ठा स नारीणामेषा दिवि च देवता । रोहिणी न विना चन्द्रं मुहूर्त्तमपि दृश्यते " इति ।

समासादि—प्राणैरसुभिः समा प्राणसमा । देवानां माया देवमाया । सर्वाणि च ता लक्षणानि, सर्वलक्षणानि तैः सम्पन्ना, इति सर्वलक्षणसम्पन्ना ।

व्याकरणम्—अनुगता = अनु + गम् + क्तः + टाप् ।

वाच्यान्तरम्—रोहिण्या शशीव सीतयाऽपि रामोऽन्वगामि ।

कोषः—'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः ।
'सततेऽनारताश्रान्तसन्ततताविरतानिशम्' इत्यमरः ।
'नित्यानवरताजस्रम्' इत्यमरः ।
'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः ।
'अचिरोढा नववधूः' इति वैजयन्ती ।
'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः' इत्यमरः ।
'रोहिणी ब्रह्मनक्षत्रं चन्द्रप्राणप्रियाऽपि च' इति कोषः ।

सारार्थः—यथैवासीमे निरवलम्बे दिवि रोहिणी चन्द्रमनुव्रजति, तथैव रामस्य प्राणप्रि सकलशुभचिह्नसमन्विता जानकी रामेण बहुशो निवारिताऽपि पातिव्रत्यपालनेच्छया सं वितविविधक्लेशेऽपि वने तमेवानुजगामेति ।

भाषाऽर्थः—रामजी की प्यारी भार्या, नित्य प्राणके समान, कल्याणकारिणी, जनक म राजके वंश में उत्पन्न हुई जो कि देवताओं की माया की भांति उत्पन्न हुई थी ऐसी शुभ लक्षणों से विभूषित स्त्रियों में श्रेष्ठ महाराज दशरथ की पुत्रवधू सीताजी भी जैसे रोहि चन्द्रमा के पीछे २ चलती है, वैसे रामजीके पीछे २ चली ॥ २६ ॥ २७ ॥

पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८ ॥
शृङ्गिबेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥

अन्वयः—पौरैः, पित्रा, दशरथेन, च, दूरम्, अनुगतः, धर्मात्मा, रामः, गङ्गाकूले, शृङ्गि बेरपुरे, प्रियं, निषादाधिपतिं, गुहम्, आसाद्य, सूतं, व्यसर्जयत् ।

व्याख्या—पौरैः = पुरवासिभिः, अयोध्यावासिभिरित्यर्थः । पित्रा = तातेन, दशरथेन, एतन्नामकेन, च = अपि, दूरं = दीर्घमार्गपर्यन्तम्, अनुगतः = अनसृतः, धर्मात्मा = धर्मस्वरू अन्नापकर्त्तुरप्यनपकारक इति भावः । रामः = भरताग्रजः, गङ्गाकूले = भागीरथीतटे, शृङ्गि रपुरे = शृङ्गिबेरपुरसंज्ञकग्रामे, अधुना 'आनापुरे'ति प्रसिद्धे । प्रियं = सुहृदं, निषादाधिपतिम् = मृगघातकस्वामिनम्, गुहम् = एतन्नामानम्, नीचजातिमपि । आसाद्य = प्राप्य, सूतं = रथवाहकम्, सुमन्त्रमित्यर्थः । व्यसर्जयत् = निवर्त्तयामास ।

समासादि--पुरे भवाः पौरास्तैः पौरैः । श्रृङ्गिणः कृष्णसारादयः, तेषां बेराणि प्रतिरूपकाणि सन्ति यस्मिन् पुरे, तद् श्रृङ्गिबेरपुरम्, तस्मिन् श्रृङ्गिबेरपुरे । गङ्गाया जाह्नव्याः कूलं तटमिति गङ्गाकूलं तस्मिन् गङ्गाकूले । धर्म आत्मा यस्य स धर्मात्मा । निषादानां मृगघातिनामधिपतिः प्रभुरिति निषादाधिपतिस्तम् । गूहति गोपयति वञ्चयति परधनानि, इति गुहस्तम् । प्रीणातीति प्रियस्तं प्रियम् ।

व्याकरणम्—अनुगतः = अनु + गम् + क्तः । व्यसर्जयत् = वि + सृज् + णिच् + लङ् । आसाद्य = आङ् + सद् + णिच् + ल्यप् ।

वाच्यान्तरम्--पौरैः पित्रा चानुगतेन रामेण सूतो व्यसर्जि ।

कोषः--'सुदूरं दीर्घमायतम्' इत्यमरः ।
'तातस्तु जनकः पिता' इत्यमरः ।
'प्रतिच्छन्दः प्रतिनिधिर्बेरं सप्रतिरूपकम्' इत्यमरः ।
'पूः स्त्री, पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः ।
'निषादो मृगघाती स्याद्' इति वैजयन्ती ।
'सूतः क्षत्ता च सारथिः' इत्यमरः।

सारार्थः--यदा रामो लक्ष्मणेन सीतया च सहितो वनगमनायोद्यतस्तदा दशरथाज्ञया सुमन्त्रो रथोपरि तान् संस्थाप्य, अयोध्यातो दक्षिणाभिमुखं प्रस्थितस्तदानीं पुत्रवात्सल्यात् किञ्चिद् दूरं दशरथोऽतिशोकशिथिलत्वादनुजगाम,, पौरास्तु गौतमीतटपर्यन्तमनुगताः, ततो-गङ्गातटस्थं श्रृङ्गिबेरपुरं प्राप्य तत्र च परमप्रियं भक्तिमन्तं नीचजातिमपि गुहं समधिगम्य, सरथं सारथिं ( सुमन्त्रं ) प्रत्यावर्त्तयामास ।

भाषाऽर्थः--नगरनिवासियों ने तथा पिता महाराज दशरथ ने दूर तक जिनका पीछा किया था, ऐसे धर्मात्मा रामजी गङ्गा के किनारे श्रृङ्गिबेरपुर नामक ग्राममें, प्रिय, निषाद जातियों का राजा जिसका 'गुह' ऐसा नाम था उसे पाकर सारथि सुमन्त्र को लौटा दिया* ॥ २८-२९ ॥

**गुहेन सहितो रामो लक्ष्मणेन च सीतया ।**
**ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥**

अन्वयः—गुहेन, लक्ष्मणेन, सीतया, च, सहितः, रामः, ( इति ) ते, वनेन, वनं, गत्वा, बहूदकाः, नदीः, तीर्त्वा, ( अग्रे गताः ) ।

व्याख्या—गुहेन = एतन्नामकेन, निषादाधिपेन । लक्ष्मणेन = सुमित्रातनयेन, सीतया = जानक्या, च = अपि, सहितः = संयुतः, रामः = भरताग्रजः, (इति) ते = चत्वारो जनाः, वनेन वनम् = एकस्माद्वनादन्यद्वनं, गत्वा = यात्वा, अनेन तदानीं गङ्गोत्तरभागे विशेषरूपेण वनमासीदिति सूचितम् , तथा च गङ्गातटे पुरं प्राप्तेष्वपि तेषु त्रिषु पुनर्वनाद्वनान्तरगमनदर्शनात् तत्पुरात्पूर्वाभिमुखं तत्तटवर्त्तिवने भ्रमणं सिद्ध्यति ततः किञ्चिद् दूरे गङ्गोत्तरणाय घट्ट आसीदस्ति चाद्यापि । वा—तेवनेन = पादचारेण, वनं गत्वा, बहूदकाः = अगाधसलिलाः, नदीः = धुनीः, गङ्गाधाराः, एकस्या एवानेका धारा आसँस्तदानीम् , वाऽऽदरार्थे बहुवचनम् । तीर्त्वा = उत्तीर्य, गङ्गादक्षिणतटं प्राप्येत्यर्थः, गुहं त्यक्त्वा ते भरद्वाजाश्रमं गता इति भावः ।

---

* जब लक्ष्मण और सीता के साथ, राम वन को चले, तब सुमन्त्र उन तीनों को रथ पर चढ़ाय दक्षिण मुह ले चले, तब मूर्च्छित दशरथ ने शोक से विह्वल होने के कारण कुछ दूर, और पुरवासी लोगों ने दूर तक उन लोगों का पीछा किया, बाद रामजी उन पुरवासियों को सोये हुए वहीं छोड़ कर के, गङ्गा किनारे में शृङ्गिबेरपुर पहुँच कर, प्रिय गुह निषाद को पाकर, सुमन्त्र सारथी को लौटा दिया ॥

समासादि—बहून्युदकानि सन्ति यासु ता बहूदकाः ।

व्याकरणम्—सहितः = सह + इतच् । गत्वा = गम् + क्त्वा । तीर्त्वा = तॄ + क्त्वा । गुहेन लक्ष्मणेन सीतयेत्यत्र सहार्थे तृतीया ।

कोषः—'तेवनं पादचारः स्याल्लीला चेति निगद्यते' इति ।
'नदी धुनी शैवलिनी स्रवन्ती तटिनो सरित्' इति ।
'उदकं सलिलं जलम्' इत्यमरः ।

सारार्थः—सीतारामलक्ष्मणा गुहेन सहितास्तदुद्योगेन गङ्गामुत्तीर्य, गुहं तत्रैव त्यक्त्वा, भरद्वाजाश्रमं गता इति ।

भाषाऽर्थः—( तब ) निषादाधिपति गुह तथा लक्ष्मण और, सीता, के साथ रामजी, ये चारों जन एक वन से दूसरे वन जाकर, तथा अथाह जल वाली नदियों का अर्थात् गङ्गाजी की धारा को पार कर' (वहीं गुह को छोड़, वे तीनों भारद्वाज ऋषि के आश्रम को गये)॥३०॥

**चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।**
**रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥**
**देवगन्धर्वसङ्काशास्तत्र ते न्यवसन्सुखम् ।**

अन्वयः—भरद्वाजस्य, शासनात्, चित्रकूटम्, अनुप्राप्य, तत्र, रममाणाः, देवगन्धर्वसङ्काशाः, ते, त्रयः, रम्यम्, आवसथं, कृत्वा, सुखं, न्यवसन् ।

व्याख्या-भरद्वाजस्य = तन्नामकस्य मुनेः, शासनाद् = उपदेशाद्, युष्माकं चित्रकूटे वसतिरुचितेति तत्रैव गच्छतेत्येवमाज्ञप्ता इति भावः। चित्रकूटम् = एतन्नामकं पर्वतम्, अनुप्राप्य द्रुतं संगम्य, तत्र = चित्रकूटे, रममाणाः = विहरन्तः, देवगन्धर्वसङ्काशाः = देवगन्धर्वनिभाः, ते = पूर्वोक्ताः, त्रयः = सीतारामलक्ष्मणाः, रम्यं = मनोहरम्, आवसथं = पर्णशालारूपं कुटीरम्, कृत्वा = निर्माय, सुखम् = अक्लेशम्, न्यवसन् = निवासं चक्रुः ।

समासादि—चित्राणि नानावर्णानि कूटानि शिखराणि वर्त्तन्ते यस्मिन् स चित्रकूटः पर्वतस्तं चित्रकूटम् । देवाश्च गन्धर्वाश्चेति देवगन्धर्वास्तैः सङ्काशा इति देवगन्धर्वसङ्काशाः ।

व्याकरणम्—अनुप्राप्य = अनु + प्र + आप् + ल्यप् । कृत्वा = कृ + क्त्वा । न्यवसन् = नि + वस् + लङ् ।

वाच्यान्तरम्—रामादिभिस्त्रिभिः सुखं न्यवासि ।

कोषः—'धिष्ण्यमोको निवसनं स्थानावसथवास्तु च' इत्यमरः ।
'निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यपि ।

सारार्थः—सीतारामलक्ष्मणा भरद्वाजमुनेराश्रमं गत्वा तस्योपदेशेन चित्रकूटं गत्वा तत्र रुचिरं निर्वाहयोग्यं पर्णकुटीरं निर्माय, इतस्ततो विहरन्तः सुखमतिष्ठन् ।

भाषाऽर्थः—(वे तीनों भरद्वाज मुनि के आश्रम को गये वहां ) उनकी शिक्षा से, ( ठहरने के लिए ) चित्रकूट जाकर, वहां पर विहार करते हुये देवता और गंधर्व के समान तीनों जन ( राम-लक्ष्मण-सीता ) सुन्दर ( पत्तों से एक ) कुटी बनाय, आनन्द से रहने लगे ॥ ३१ ॥

**चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ॥ ३२ ॥**
**राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।**

अन्वयः—रामे, चित्रकूटं, ( प्रति ), गते, ( सति ) तदा, पुत्रशोकातुरः, राजा, दशरथः, सुतं, विलपन्, स्व , जगाम ।

व्याख्या—रामे = भरताग्रजे, चित्रकूटम् = तन्नामकगिरिम्, गते = याते, सतीति शेषः, तदा = तस्मिन्नवसरे, पुत्रशोकातुरः = वृद्धवयःसंजातसुतविच्छेदखेदादिं तः, राजा = पुनरारो

पितराज्यभारो दशरथः, सुतम् = पुत्रम् , हा राम ! हा लक्ष्मण ! हा सीते ! एवं, विलपन् = विलापं कुर्वन् , स्वर्ग = दिवं, जगाम = गतः ।

समासादि—पुत्रयोः शोकः पुत्रशोकस्तेनातुर इति पुत्रशोकातुरः ।

व्याकरणम्—जगाम = गम् + लिट् । विलपन् = वि + लप् + शतृ ।

वाच्यान्तरम्—विलपता राज्ञा दशरथेन स्वर्गो जग्मे ।

सारार्थः—सीतारामलक्ष्मणेषु चित्रकूटं गतेषु पुत्रत्यागानुतापपीडितो दशरथो विलपन् स्वर्गं जगाम, ततो वसिष्ठादयोऽराजकं राज्यं विज्ञाय केकयदेशाद् भरतस्यानयनाय दूतं प्रेषितवन्तः ।

भाषाऽर्थः—जब सीता, राम, लक्ष्मण चित्रकूट को गये, तब पुत्रशोक से अत्यन्त पीड़ित राजा दशरथ ने, (हा राम ! हा लक्ष्मण ! हा सीते ! इस तरह) विलखते हुये प्राण छोड़ दिया, (तब राजहीन राज्य देख वसिष्ठजी भरत को ननिहाल से लाने के लिये दूत भेजे ) ॥३२॥

गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।

अन्वयः—तस्मिन् ( दशरथे ), गते, तु, वसिष्ठप्रमुखैः, द्विजैः, राज्याय, नियुज्यमानः, महाबलः, भरतः, राज्यं, न, एच्छत् ।

व्याख्या—तस्मिन् = दशरथे, गते = पञ्चत्वं प्राप्ते सति, वा-तस्मिन् = रामे, गते = वनं याते, वसिष्ठप्रमुखैः = वसिष्ठादिभिः, द्विजैः = ब्राह्मणैः, राज्यरक्षकैरिति भावः । न केवलं तदानीन्तनाः पुरोहिता गुरवश्च स्वोदरपूरणार्थमातुरा आसन् , प्रत्युत राजोपद्रवे स्वोपदेशेन राज्यभारमपि वहन्ति स्म । राज्याय = राज्यं कर्तुं, नियुज्यमानः = प्रेर्यमाणः, महाबलः = राज्यभारवहनदक्षः, अपि । भरतः = केकयीपुत्रः ( यदर्थं तन्माता राज्यं वव्रे सः ). राज्यम् = राजत्वम् , राज्यभारम् । न ऐच्छत् = न ह्यभ्यलषत् । उक्तं च तेन—"कथं दशरथाज्जातो भवेद्राज्यापहारकः" इति ।

समासादि—वसिष्ठः प्रमुखो मुख्यो येषां ते वसिष्ठप्रमुखास्तैर्वसिष्ठप्रमुखैः । द्वाभ्यां जन्मसंस्काराभ्यां जायन्ते ये ते द्विजास्तैर्द्विजैः । महद् बलं यस्य स महाबलः ।

व्याकरणम्—गते = गम् + कर्तरि + क्तः । नियुज्यमानः = नि + युज् + यक् + शानच् । ऐच्छत् = इष् + लङ् ।

वाच्यान्तरम्—नियुज्यमानेन भरतेन राज्यं नैष्यत ।

कोषः—'क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।
मुख्यवर्यवरेण्याश्च' इत्यमरः ।
'दन्तविप्राण्डजा द्विजाः' इत्यमरः ।

सारार्थः—महाराजे मृते, अराजकतां ज्ञात्वा सत्वरं वसिष्ठादिभिः केकयदेशस्थो भरतो-दूतद्वारा समानीतः, राज्यं कर्तुं बहुश उपदिष्टोऽपि भरतो राज्यं नाङ्गीकृतवान् , प्रत्युत स्वमातरं कैकेयीं निनिन्द ।

भाषाऽर्थः—महाराज के मरने के बाद ( केकयदेश से बुलाये गये ) वसिष्ठ आदि ऋषियों के राज्य करने के लिये कहने पर भी महाबलवान् भरत जी ने राज्य नहीं किया ॥ ३३ ॥

स जगाम वनं वीरो रामपादप्रसादकः ॥ ३४ ॥
गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।
अयाचद् भ्रातरं राममाऽऽर्यभावपुरस्कृतः ॥ ३५ ॥
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।

अन्वयः—वीरः, रामपादप्रसादकः, सः वनं, जगाम, राममाऽऽर्यभावपुरस्कृतः, सः (वनं) गत्वा, महात्मानं, सत्यपराक्रम, भ्रातरं, रामम्, अयाचत् (किमित्याह) त्वम्, एव, धर्मज्ञः, राजा, इति, वचः, रामम्, अब्रवीत् ।

व्याख्या—वीरः = उत्साहबर्धनः, रामपादप्रसादकः = रामचरणसेवकः, सः = भरतः, वनं = चित्रकूटोपवनम्, जगाम = प्राप, राममाऽऽर्यभावपुरस्कृतः = रामचन्द्रस्य परमसम्पत्तिसीतायां श्रेष्ठत्वभाववान्, सः = भरतः, गत्वा = चित्रकूटं प्राप्य, महात्मानम् = महाधियम्, सत्यपराक्रमम् = अव्यर्थविक्रमम्, भ्रातरं = पूर्वजम्, रामम् = एतन्नामकम्, अयाचत् = प्रार्थयामास, किमित्याह—त्वम् = भवान्, एव = निश्चयेन, राजा = राज्यभारवहनयोग्यः, धर्मज्ञः = राजनीतिज्ञः, अर्थाद्-ज्येष्ठे विद्यमाने कनिष्ठो न राज्यमर्हतीति धर्मवेत्ता, असीति शेषः । इति = एतद्, वचः = वचनम्, रामम् = निजाग्रजं, प्रति । अब्रवीत् = उवाच ।

समासादि—रामस्य पादौ, रामपादौ, तौ प्रसादयतीति रामपादप्रसादकः । वा-रामपादप्रसादेन कं सुखं यस्य स रामपादप्रसादकः । महानात्मा यस्य स महात्मा, तम् महात्मानम् । सत्यः पराक्रमो यस्य स सत्यपराक्रमस्तम् । आर्यस्य भाव आर्यभावः, रामस्य मा परमसम्पत्तिः सीतेति राममा, तस्यामार्यभाव इति राममाऽऽर्यभावस्तेन पुरस्कृत इति राममाऽऽर्यभावपुरस्कृतः । धर्मं जानातीति धर्मज्ञः ॥

व्याकरणम्—जगाम = गम् + लिट् । गत्वा = गम् + क्त्वा । अयाचत = याच् + लङ् ।

वाच्यान्तरम्—तेन वीरेण वनं जग्मे, तेन महात्मा रामोऽयाचि, रामो वचोऽवोचि च ।

कोषः—'उत्साहबर्धनो वीरः' इत्यमरः ।
'प्रसादस्तु प्रसन्नता' इत्यमरः ।

सारार्थः—रामस्यैकान्तभक्तो भरतः, वसिष्ठादिभिर्गुरुजनैः, मातृभिश्च सहितो भूत्वा चित्रकूटं गत्वा, त्वमेव राज्याधिकारी, न कुत्रापि ज्येष्ठे विद्यमाने कनिष्ठो राज्यभागिति हेतोरयोध्यां निवर्त्तस्व, इति सविनयं रामं प्रार्थयामास ।

भाषाऽर्थः—वीर, रामजी के चरणानुरागी, वे भरतजी ( गुरुजनों के साथ ) वन को गये रामजी की परम सम्पत्ति स्वरूपा जानकीजी में श्रेष्ठता का भाव ( हृदय में ) रक्खे हुए ( विनीत वेष से ) वे ( भरतजी ) चित्रकूट जाकर महात्मा, अव्यर्थ पराक्रमी, सुन्दर स्वरूप वाले, भाई राम से राज्य करने के लिये प्रार्थना की, और 'आप ही धर्म के जानने वाले राजा हैं, ऐसा वचन उन ( रामजी ) से बोले ॥ ३४ ॥ ३५ ॥

रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥ ३६ ॥
न चैच्छत् पितुरादेशाद्राज्यं, रामो महाबलः ।
पादुके चास्य राज्याय न्यासं दत्वा पुनः पुनः ॥ ३७ ॥
निवर्त्तयामास ततो भरतं भरताग्रजः ।

अन्वयः—परमोदारः, सुमुखः, सुमहायशाः, रामः, अपि, पितुः, आदेशाद्, राज्यं, न, च, ऐच्छत् ( अपि तु ), महाबलः, भरताग्रजः, रामः, अस्य, राज्याय, न्यासं, पादुके, दत्वा, ततः, पुनः, पुनः, भरतं, निवर्त्तयामास, ।

व्याख्या—परमोदारः = स्वार्थविमुखः, सुमुखः = अम्लानवदनः, प्रसन्नानन इति वा, सुमहायशाः = प्रसिद्धकीर्त्तिः, रामः = कौशल्यातनयः अपि = प्रार्थितोऽपि बहुशः, पितुः = दशरथस्य, आदेशाद् = निर्देशात्, राज्यम् = राजत्वं, न च ऐच्छत्, = न ह्यप्यभिलषितवान्, अर्थाद्-भरतप्रार्थनास्वीकारे पितुः सत्यभङ्गः स्याद्, यद्यपि भरतोऽपि रामस्य प्राणसमप्रिय आसीत्परन्तु पितुरपेक्षया लघुभ्रातुः साधारणार्हत्वाद्, योग्यो विचारो रामस्य । अथ च-महाबलः = अपरिमितवीर्यः, भरताग्रजः = भरतज्येष्ठः, ( अनेन रामस्य भरतवाक्यानङ्गी

कारे न दोषः, भरतस्य तु रामवाक्यास्वीकारे दोषः सूचितः) रामः = सीतापतिः, राज्याय = राज्यं कर्तुम्, अस्य = भरतस्य, भरतायेत्यर्थः । पादुके = काष्ठपादुके, न्यासं = स्वप्रतिनिधिरूपं, दत्वा = समर्प्य, ततः = चित्रकूटोपवनात्, पुनः पुनः, = वारं वारं, भरतं = केकयीतनयं, निवर्त्तयामास = न्यवर्त्तयत, पुनः पुनरित्यनेन भरतस्य, राम एव राजा भवत्वित्यर्थं महानाग्रहः सूच्यते ।

समासादि–सुमहद् यशो यस्य स सुमहायशाः । भरतस्याग्रजो भरताग्रजः, वा–भरताद्ग्रजो भरताग्रजः ।

व्याकरणम्—ऐच्छत् = इष् + लङ् । दत्वा = दा + क्त्वा । निवर्त्तयामास = नि + वृत् + णिच् + लिट् ।

वाच्यान्तरम्—रामेणाऽपि राज्यं नैष्यत, रामेण भरतो निवर्तयाञ्चक्रे ।

कोषः—'दक्षिणे सरलोदारौ' इत्यमरः ।

'आदेश उपदेशः स्याच्छिक्षाऽनुज्ञानमित्यपि' इति ।

'अथ पादुका । पादूरुपानत्स्त्री सैवानुपदीना पदायता' इत्यमरः ।

'पुमानुपनिधिर्न्यासः' इत्यमरः ।

सारार्थः—भरतेन भूयो भूयो राज्याय प्रार्थितोऽपि रामः पितुरादेशपालनव्रतभङ्गभिया राज्यं नाङ्गीकृतवान्, तथा च भरतस्याग्रहनिर्वाहार्थं निजपादुके राज्यन्यासाय दत्ते, यदस्योपरि राज्यभारं समर्प्य ततः स्वयं राज्यं कुर्विति संबोध्य भरतं रामो निवर्त्तयामास ।

भाषाऽर्थः–अत्यन्त उदार, प्रसन्नवदन, बड़े यशस्वी रामजी ने पिताजी की आज्ञा का रक्षण करने के लिये, राज्य को नहीं चाहा, अर्थात्–भरत का हठ न माना–किन्तु अतिबलवान् भरतजी के बड़े भाई रामजी ने राज्य करने के लिये, भरतजी को अपने प्रतिनिधि में पादुका ( खडाउं ) देकर ( इस पर राज्यभार समर्पण कर पीछे खुद सब काज चलाना, यह कह कर ) वार वार चित्रकूट से भरतजी को अयोध्या को लौटाया ॥ ३६ ॥ ३७ ॥

स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ३८ ॥
(१)नन्दिग्रामेऽकरोद्राज्यं, रामागमनकाङ्क्षया ।

अन्वयः—सः, कामम्, अनवाप्य. एव, रामपादौ, उपस्पृशन्, नन्दिग्रामे, रामागमनकाङ्क्षया, राज्यम्, अकरोत् ।

व्याख्या—सः = भरतः, कामम् = अभिलाषम्, रामानयनरूपम्, अनवाप्य = अप्राप्य, बहुशो यत्ने कृतेऽपि स्वमनोरथासिद्धिं ज्ञात्वा तत्पादुके आदरेणादाय "सर्वनाशात्स्वल्पनाशोऽपि वरम्" इति न्यायात् । रामपादौ = रामपादोपनिहितपादुके, उपस्पृशन् = राज्यकार्यं निवेदयन् सन्, नन्दिग्रामे = एतन्नामके ग्रामे, अयोध्यातो दक्षिणस्यां दिशि क्रोशान्तरित-इत्यर्थः । रामागमनकाङ्क्षया = रामागमनसमयप्रतीक्षया, यावच्चतुर्दश वर्षाणि रामो वनाद्गमिष्यति, तावदहमत्रैव स्थित्वा तदादेशेन सर्वं सम्पादयिष्यामि, नाहमयोध्यां गमिष्याम्येकाकी, रामलक्ष्मणाभ्यां सहैव यास्यामि तत्रेति भरतस्यापूर्वो विचारः । राज्यं = प्रजापालनरूपम्, अकरोत् = चकार ।

समासादि—रामस्य पादौ रामपादौ । आगमनस्यकाङ्क्षेत्यागमनकाङ्क्षा, रामस्यागमनकाङ्क्षेति रामागमनकाङ्क्षा, तया रामागमनकाङ्क्षया ।

कोषः—'कामोऽभिलाषः कन्दर्पश्च' इति विश्वः ।

सारार्थः—भरतस्तु रामप्रत्यानयनरूपं स्वमनोरथमलब्ध्वाऽन्ते तत्पादुके गृहीत्वा 'विना

---

( १ ) क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥ ल० का० १२९ सर्ग ।

राममयोध्यां नाहं गमिष्यामि' इति निश्चित्यायोध्यादक्षिणभागे वर्त्तमाने नन्दिग्रामे स्वनि-वासं कृत्वा तत्पादुकयोरुपरि राज्यभारं समर्प्य, पश्चात् स्वयं सर्वं सम्पादयंस्तत्रैव स्थितः।

भाषाऽर्थः—वह भरतजी 'रामजी को जरूर लौटाऊंगा, यह मनोरथ न पाकर, जब तक रामजी न आवेंगे, मैं अयोध्या नहीं जाऊंगा, यह नियम कर ) रामजीकी पादुका से राज-कार्य निवेदन करते हुये, नन्दिग्राम में ( अयोध्यासे १ कोश दक्षिणभागमें ) रामजी के लौटने के समय की प्रतीक्षा करने के कारण से ( रहते हुये ) राज काज चलाने लगे ॥ ३८ ॥

गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ ३९ ॥
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ ४० ॥

अन्वयः—भरते, गते, तु, श्रीमान्, सत्यसन्धः, जितेन्द्रियः, रामः, तु, तत्र, नागरस्य जनस्य, पुनः, आगमनम्, आलक्ष्य, एकाग्रः ( सन् ), दण्डकान्, प्रविवेश, ह ।

व्याख्या—भरते = केकयीपुत्रे, गते = याते, चित्रकूटात्प्रस्थिते, तु, श्रीमान् = शोभावान्, सत्यसन्धः = सत्यप्रतिज्ञः, अत एव । जितेन्द्रियः = वशीकृतेन्द्रियगणः, रामस्तु = रामोऽपि तत्र = चित्रकूटे, नागरस्य = अयोध्यावासिनः, वा–चित्रकूटनिकटवर्त्तिग्रामनिवासिनः, जनस्य = लोकस्य, च = पुनः, द्वितीयतृतीयादिवारम्, आगमनम् = यातायातम्, आलक्ष्य = आलोच्य, एकाग्रः = स्थिरलक्ष्यः, वा–सज्जः सन् । दण्डकान् = दण्डकारण्यानि, प्रविवेश = अन्तर्ययौ । ह = इति प्रसिद्धौ ।

समासादि—सत्या सन्धा यस्य स सत्यसन्धः । जितानीन्द्रियाणि येन स जितेन्द्रियः नगरे भवो नागरस्तस्य नागरस्य ।

व्याकरणम्—गते = गम् + कर्तरि + क्तः । आलक्ष्य = आङ् + लक्ष् + ल्यप् । प्रविवेश = प्र + विश् + लिट् ।

वाच्यान्तरम्—रामेण दण्डकाः प्रविविशिरे ।

कोषः—'सन्धा प्रतिज्ञा मर्यादा' इत्यमरः ।
'हृषीकं विषयीन्द्रियम्' इत्यमरः ।
'ग्रामस्तु नगरं पुरम्' इत्यमरः ।

सारार्थः—चित्रकूटाद्भरते प्रस्थिते रामस्तत्र स्वदर्शनमिलनार्थिनां संमर्दं भाविनं विचिन्त्य दण्डकारण्यं सपरिजनः प्रविवेश, उचितमेवैतदेकान्तवासप्रियत्वं मनस्विनः ।

भाषाऽर्थः—चित्रकूट से जब भरत जी चले आये, तब श्रीमान्, सत्यप्रतिज्ञा वाले जितेन्द्रिय रामजी भी वहां पर नगरनिवासी अर्थात् अपने देश वासी लोगों का फिर, आना समझ कर, अपने लक्ष्य पर स्थिर रहने वाले होते हुये दण्डकारण्यमें चले गये ॥ ३९ ॥४० ॥

प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा, शरभङ्गं ददर्श ह ॥ ४१ ॥
सुतीक्ष्णञ्चाप्यगस्त्यञ्च अगस्त्यभ्रातरं तथा ।

अन्वयः—राजीवलोचनः, रामः, महारण्यं, तु, प्रविश्य, विराधं, राक्षसं, हत्वा, शरभङ्गं सुतीक्ष्णं, च, अगस्त्यम्, अपि, तथा, अगस्त्यभ्रातरं, च, ददर्श, ह ।

व्याख्या—राजीवलोचनः = कमलनयनः, रामः = प्रसिद्धः, कौशल्यातनयः । महारण्यं = दण्डकवनं, तु, प्रविश्य = प्रवेशं कृत्वा, विराधम् = एतन्नामकं, राक्षसं = कौणपं, हत्वा = मारयित्वा, शरभङ्गम् = एतन्नामकं मुनिविशेषं, तथा । सुतीक्ष्णं च = एतन्नामकं मुनिमपि, अगस्त्यमपि = एतन्नामकं समुद्रशोषकं मुनिञ्च, तथा = तेन प्रकारेण, अगस्त्यभ्रातरञ्च = सुदर्शननामानं

मपि, ददर्श = दृष्टवान् , ह = इति प्रसिद्धौ, तथाचोक्तं सनत्कुमारसंहितायाम्--'यवीयानेष मे भ्राता सुदर्शन इति स्मृतः' इति ।

समासादि-राजीवे इव लोचने यस्य स राजीवलोचनः । अगस्त्यस्य भ्राताऽगस्त्यभ्राता, तमगस्त्यभ्रातरम् ।

व्याकरणम्--प्रविश्य = प्र + विश् + ल्यप् । हत्वा = हन् + क्त्वा । ददर्श = दृश् + लिट् ।

वाच्यान्तरम्--रामेण शरभङ्गादयो ददृशिरे ।

कोषः--पङ्केरुहं तामरसं सारसं सरसीरुहम् ।

बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः ।

'राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आसरः' इत्यमरः ।

'अगस्त्यः कुम्भसम्भवः' इत्यमरः ।

सारार्थः--कमललोचनो रामो दण्डकारण्यं प्रविश्य विराधनामकं राक्षसं हत्वा शरभङ्ग-सुतीक्ष्णावगस्त्यं तद्भ्रातरं सुदर्शनञ्च ददर्शेति ।

भाषाऽर्थः--कमल नयन श्री रामजी ने, दण्डक वनमें घुस कर, विराध नामक राक्षस को मार कर, शरभङ्ग, सुतीक्ष्ण, और अगस्त्य, तथा अगस्त्य के भाई सुदर्शन ( आदि ) मुनियों का दर्शन किया ॥ ४१ ॥

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२ ॥
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।

अन्वयः--परमप्रीतः, ( रामः ), अगस्त्यवचनात्, च, एव, ऐन्द्रं, शरासनम्, खड्गं, च, अक्षयसायकौ, तूणी, च, जग्राह ।

व्याख्या--परमप्रीतः = अतिप्रसन्नः, ऋषीणां दर्शनादुपदेशाच्चेत्यर्थः । अगस्त्यवचनाद् = अगस्त्यवाक्याद्, च = समुच्चयेऽर्थे, एव, = निश्चयेन, ऐन्द्रम् = इन्द्रसम्बन्धि, शरासनम् = धनुः, तथा चैन्द्रमेव । खड्गं = चन्द्रहासम्, च = अपि, ऐन्द्रौ, एव । अक्षयसायकौ = अव्ययशरौ, तूणी = निषङ्गौ, च = अपि, जग्राह = स्वीकृतवान् ।

समासादि--अगस्त्यस्य वचनमगस्त्यवचनम्, तस्मादगस्त्यवचनात् । परमश्चासौ प्रीतः परमप्रीतः । अक्षयाः सायकाः शरा ययोस्तावक्षयसायकौ ।

व्याकरणम्--जग्राह = ग्रह् + लिट् ।

वाच्यान्तरम्--रामेणैन्द्रं शरासनं जगृहे ।

कोषः--'शरासनं धनुश्चापौ कोदण्डं कार्मुकं तथा' इति सरस्वती ।

'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः ।

'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः ।

सारार्थः-अगस्त्यमुनेरुपदेशात् परमसन्तुष्टस्तत्सकाशादिन्द्रस्य धनुः, खड्गम्, अक्षयशरौ, तूणीरौ, च, जग्राह ।

भाषाऽर्थः--अत्यन्त प्रसन्न रामजी ने अगस्त्यजी के कहने से, इन्द्र के धनुष और तलवार, और अक्षयशर वाले तूणीर को भी ग्रहण किया ॥ ४२ ॥

वसतस्तस्य रामस्य वने वनचरैः सह ॥ ४३ ॥
ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ।
स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ ४४ ॥

अन्वयः--सर्वे, ऋषयः, वने, वनचरैः, सह, वसतः, तस्य, रामस्य, ( स्थाने ) असुररक्षसाम्, वधाय, अभ्यागमन् । तदा सः, राक्षसानां, वने, तेषां ( तथा ) प्रतिशुश्राव । यथा तैरर्थितम् ।

व्याख्या—सर्वे = सकलाः, ऋषयः = शरभङ्गादयः, वने = कानने, वनचरैः = वानप्रस्थैः, सह = साकम्, वसतः = तिष्ठतः, तस्य = पूर्वोक्तस्य, रामस्य = भरताग्रजस्य, स्थाने । असुररक्षसाम् = असुराः कबन्धादयः, रक्षांसि खरादयः, तेषाम् । वधाय = वधं कारयितुं, 'तेषां हननं कुरु' इति प्रार्थयितुं वा । अभ्यागमन् = अभिमुखतया समागताः, तदा = ऋषीणामागमनकाले, सः = रामः, राक्षसानां = विराधादीनां, वने = विपिने, दण्डकारण्ये । तेषाम् = ऋषीणाम्, तथा । प्रतिशुश्राव = यथा तैरर्थितं तथा प्रतिजज्ञे ।

समासादि—वने चरन्तीति वनचरास्तैर्वनचरैः । असुराश्च रक्षांसि चासुररक्षांसि, तेषामसुररक्षसाम् ।

व्याकरणम्—वसतः + वस् + शतृ + ङस् । अभ्यागमन् = अभि + आङ् + गम् + लुङ् ।

वाच्यान्तरम्--सर्वैर्ऋषिभिरभ्याजग्मे ।

कोषः—'तपः क्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ।
ऋषयः सत्यवचसः' इत्यमरः ।
'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः' इत्यमरः ।
'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' इत्यमरः ।

सारार्थः--वनचरैः सह वने निवसतो रामस्याश्रमे दैत्यानां नाशविधानाय सर्वे ऋषयः समागताः ।

भाषाऽर्थः--सम्पूर्ण ऋषि लोग वन में वनवासियों के साथ रहते हुए उन राम जी के पास दैत्य दानवों के संहार करवाने के लिये आये, तब उस समय उन्होने राक्षसों के दण्डकवनमें उन ऋषियों से वैसी प्रतिज्ञा की कि—जैसी वे सब चाहते थे, अर्थात्-राक्षसों के मारने की प्रतिज्ञा की ॥ ४३ ॥ ४४ ॥

प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४५ ॥

अन्वयः—रामेण, अग्निकल्पानां, दण्डकारण्यवासिनाम्, ऋषीणाम् ( समीपे एव ) संयति, रक्षसां, वधः, प्रतिज्ञातः, च,

व्याख्या—(तदा) रामेण = भरताग्रजेन, अग्निकल्पानां = वह्निसदृशतेजोयुक्तानाम्, दण्डकारण्यवासिनां = दण्डकवनस्थानाम्, ऋषीणां = सत्यवचसां, पुरत एव । संयति = युद्धे रक्षसां = खरादीनां, वधः = नाशः, प्रतिज्ञातः = प्रत्यश्रूयत, च = एव, अर्थाद्—मुनीनामग्रे एव दैत्यसंहाराय प्रतिज्ञा रामेण कृता ।

समासादि-अग्नेः कल्पाः प्रतिरूपा इत्यग्निकल्पास्तेषाम् । दण्डकारण्ये वस्तुं शीलमेषां दण्डकारण्यवासिनस्तेषां दण्डकारण्यवासिनाम् ।

व्याकरणम्--प्रतिज्ञातः = प्रति + ज्ञा + क्तः ।

वाच्यान्तरम्--रामो रक्षसां वध प्रत्यज्ञासीत् ।

कोषः—'आश्रवः सङ्गरं सन्धा प्रतिश्रवः संश्रयः प्रतिज्ञा च" इति हलायुधः ।
'समुदायः स्त्रियां संयत् समित्याजिसमिद्युधः' इत्यमरः ।

सारार्थः—मुनीनां समक्षमेव राक्षसहननस्य प्रतिज्ञा रामेण कृतेति ।

भाषाऽर्थः—और राम जी ने अग्नि के समान तेजस्वी, दण्डकारण्यवासी ऋषियों के सामने युद्ध में राक्षसों के मारने की प्रतिज्ञा की ॥ ४५ ॥

तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४६ ॥

अन्वयः—तत्र, एव, वसता, तेन, जनस्थाननिवासिनी, कामरूपिणी, राक्षसी, शूर्पणखा, विरूपिता ।

व्याख्या—तत्र = दण्डकारण्ये, एव = निश्चयेन, वसता = तिष्ठता, तेन = रामेण, (वस्तुतो-रामानुज्ञातलक्ष्मणेन)। जनस्थाननिवासिनी = जनस्थानस्थायिनी, कामरूपिणी = स्वेच्छारूपधारिणी, राक्षसी = रात्रिचरी, शूर्पणखा = तन्नामिका रावणभगिनी, विरूपिता = नासिकाच्छेदेन कुत्सितरूपं प्रापिता ।

समासादि—जनस्थाने रावणसैन्यनिवासे निवस्तुं शीलमस्या इति जनस्थाननिवासिनी । कामं यथेच्छं रूपं यस्याः सा कामरूपिणी । शूर्पा इव उत्ताना नखा यस्याः सा शूर्पणखा ।

वाच्यान्तरम्—रामो वसन् शूर्पणखां व्यरूपयत् ।

सारार्थः—एकदा दैवाद् शूर्पणखा राममतिमनोहरं विलोक्य कामार्त्ता भूत्वा तं विवाहार्थं प्रार्थितवती, परन्तु तत्प्रार्थनामनादृत्य दूरं गच्छेति कथिता सीतामेव भक्षणार्थं धाविता, तथाविधामुपद्रवकरीं शूर्पणखां दृष्ट्वा रामो 'दुष्टाय दण्डो दातव्य' इति धिया लक्ष्मणमादिश्य नासाच्छेदनं कारितवान् ।

भाषाऽर्थः—वहीं ( दण्डकारण्य में ) रहते हुये उन रामजी ने अर्थात् उनकी आज्ञा से लक्ष्मणजी ने वहां की रहने वाली नाना रूपधारण करने वाली, राक्षसी, शूर्पणखा को विरूप ( नासाछेदन से ) कर दिया ॥ ४६ ॥

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ ४७ ॥
निजघान रणे रामस्तेषां चैव पदानुगान् ।

अन्वयः—ततः, रामः, शूर्पणखावाक्याद्, उद्युक्तान्, सर्वराक्षसान्, खरं, त्रिशिरसं, चैव, दूषणं, राक्षसं, चैव, तेषां, पदानुगान्, च, एव, रणे, निजघान ।

व्याख्या—ततः = शूर्पणखाविरूपकरणानन्तरम्, रामः = भरताग्रजः, एकाकी एव, शूर्पणखावाक्यात् = शूर्पणखाधिक्काररूपवचनात्, (सर्वे यूयं नपुंसकाः कथमन्यथा युष्मासु जीवत्सु वो भगिन्या ममेदृशी दशा स्यात् साऽपि तापसनरेण कृता, अहह ! सर्वथा राक्षसकुले नहि विद्यन्ते केऽपि साम्प्रतं वीराः कुलमर्यादापालका इत्येवं रूपाद् ), उद्युक्तान् = कृतयुद्धोद्योगान्, सर्वराक्षसान् = सकलरजनीचरान्, ( तथा तेषु प्रधानं ) खरं, त्रिशिरसं, चैव, दूषणम् = तन्नामकम्, राक्षसं = क्रव्यादं, च = अपि, एव = निश्चयेन, तथा-तेषाम् = खरादीनाम्, पदानुगान् = चरणानुचरान्, चतुर्दशसंख्यकान् । च = अपि, एव = निश्चयेन, रणे = समरे, निजघान = हतवान् ।

समासादि—शूर्पणखाया वाक्यं शूर्पणखावाक्यम्, तस्माच्छूर्पणखावाक्यात्। सर्वे च ते राक्षसाः सर्वराक्षसास्तान् । पदस्यानु पश्चाद् गच्छन्ति ये ते पदानुगास्तान् पदानुगान् ।

व्याकरणम्—निजघान = नि + हन् + लिट् ।

वाच्यान्तरम्—रामेण सर्वे राक्षसा निजघ्निरे ।

कोषः—'संग्रामः संगरो रणः' इति शब्दचन्द्रिका ।

सारार्थः—शूर्पणखा विरूपिता भूत्वा खरादीनां समीपे विलपन्ती गत्वा, स्वविरूपकरणं श्रावयित्वा बहु धिक्कृतवती, तन्निशम्य युद्धायोद्यतान् चतुर्दशसहस्रसंख्यकान् रजनीचरान् राम एकाकी एव निमिषार्द्धेन हतवान्, तेषां वधं दृष्ट्वैव रावणान्तिकं दुःखनिवेदनार्थं सा गता ।

भषाऽर्थः—उसके (शूर्पणखा को विरूप कर चुकने के) बाद रामजी ने शूर्पणखा के वाक्य से लड़ाई करने के लिये तइयार हुये सब राक्षसों को तथा उन में प्रधान खर—त्रिशिरा—

 

तथा दूषण नामक राक्षस को तथा उन सबों के पदानुयायी ( १४ हजार ) राक्षसों को भी युद्ध में मारा ॥ ४७ ॥

वने तस्मिन् निवसता जनस्थाननिवासिनाम् ॥ ४८ ॥
रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ।

अन्वयः—तस्मिन्, वने, निवसता, ( रामेण ) जनस्थाननिवासिनां, रक्षसां, चतुर्दश सहस्राणि, निहतानि, आसन् ।

व्याख्या—तस्मिन् = पूर्वोक्ते, वने = विपिने, दण्डकारण्य इति यावद् । निवसता = वास कुर्वता, रामेणेति शेषः । जनस्थाननिवासिनां = रावणसैन्यनिवेशस्थानस्थायिनां, रक्षसां = राक्षसानां, चतुर्दशसहस्राणि = चतुर्दशसहस्रसङ्ख्यासङ्ख्यातानि, सैन्यानीत्यर्थः । निहतानि = नाशितानि, आसन् = अभवन् ।

समासादि—जनानां स्थानमिति जनस्थानं, जनस्थाने निवस्तुं शीलमेषान्तानि जनस्थाननिवासीनि तेषां जनस्थाननिवासिनाम् ।

व्याकरणम्—निहतानि = नि + हन् + क्तः । आसन् = अस् + लङ् ।

वाच्यान्तरम्—निहतैः रक्षसां चतुर्दशसहस्रैरासे ।

सारार्थः—पञ्चवटीसमीपे एकाकिना रामेण चतुर्दशसहस्रसंख्यका राक्षसा निमिषार्धे निहता इति ।

भाषाऽर्थः—उस वन में रहते हुए रामजी ने जनस्थान में रहने वाले चौदह हजार ख दूषण-त्रिशिरा आदि राक्षसों को मारा ॥ ४८ ॥

ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥ ४९ ॥
सहायं वरयामास मारीचं नाम राक्षसम् ।

अन्वयः—ततः, ( शूर्पणखामुखाद् ), ज्ञातिवधं, श्रुत्वा, क्रोधमूर्च्छितः, रावणः, मारी नाम, राक्षसं, सहायं, वरयामास ।

व्याख्या—ततः = शूर्पणखावाक्यादेव, ज्ञातिवधं = निजबन्धुखरादिनाशं, ( खरदूषण शिरांसो रावणस्य वैमात्रेया आसन् ) श्रुत्वा = निशम्य, क्रोधमूर्च्छितः = क्रोधघूर्णितः, अ र्पहतचेतनः । रावणः = तन्नामकः, विश्रवसः पुत्रः, लङ्काऽधिराजः शूर्पणखादुःखप्रतीका खरादिनाशामर्षदूरीकरणाय च । मारीचम् = तन्नामकम्, नाम = प्रसिद्धौ, राक्षसं = रजन रम्, सहायम् = सीताहरणे कर्त्तव्ये सहायकम्, वरयामास = ययाचे ।

समासादि—ज्ञातीनां वधो ज्ञातिवधस्तं ज्ञातिवधम् । रावयतीति रावणः, मूर्च्छा जात स्येति मूर्च्छितः, क्रोधेन मूर्च्छितः, क्रोधमूर्च्छितः ।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा । वरयामास = वर + णिच् + लिट् ।

वाच्यान्तरम्—क्रोधमूर्च्छितेन रावणेन मारीचः सहायो बव्रे ।

कोषः—'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः ।
'आलम्भ-पिञ्ज-विशर-घातो-न्माथ-वधा अपि ।
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः' इत्यमरः ।
'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः ।
'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरः ।

सारार्थः—शूर्पणखामुखात्तस्या दुर्दशां तथा खरदूषणादेश्च वधं ज्ञात्वा क्रोधात् किंकर्तव्य विमूढः सन् रामविप्रतिकाराय मारीचं साहाय्यार्थं रावणो न्यवेदयत्, यतो मारीचो रामे विश्वामित्राश्रमाद् दूरमपवाहितस्तेनासौ रामविरोधी भविष्यन्, तस्य हानिं करिष्यतीति

बुद्ध्या मारीचमेव जगाम ।

भाषाऽर्थः—उस के वाद ( शूर्पणखा के मुख से उसकी दुर्दशा ) और अपने भाइयों का नाश सुन कर क्रोध से व्याकुल हुआ रावण मारीचनामक राक्षस से ( सीता के हरण करने में ) सहायता मांगी ॥ ४९ ॥

वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ ५० ॥
न विरोधो बलवता क्षमो रावण! तेन ते ।
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१ ॥
जगाम सहमारीचस्तस्याश्रमपदं तदा ।

अन्वयः—हे रावण !, बलवता, तेन, ते, विरोधः, न, क्षमः, (एवं) सुबहुशः, मारीचेन, सः, रावणः, वार्यमाणः, (अभूत् ), तु, तदा, रावणः, कालचोदितः, (सन् ) तद्वाक्यम् , अनादृत्य, सहमरीचः, तस्य, आश्रमपदं, जगाम ।

व्याख्या—हे रावण ! = लङ्काऽधिपते !, बलवता = अलौकिकवीर्यशालिना, तेन = रामनामकेन, ते = तव, मितवीर्यस्य । विरोधः = कलहः, न = कथमपि नहि, क्षमः = युक्तः, यतोऽहं तद्बाणप्रेरित एव विश्वामित्राश्रमात् सागरापरपारं प्राप्तः, अतस्तदलौकिकं श्लाघ्यं विक्रमं स्मृत्वा तस्य च्छायामप्यतिक्रामितुमिच्छा मे नोदेति, अतो नैव भवता कालविषधरस्य शिरसि पादारोपणवद् दुःसाहसं कर्त्तव्यमित्येवम् । सुबहुशः = अनेकशः, तत्कथोपकथनैः । मारीचेन = तन्नामकराक्षसेन, सः = प्रसिद्धः, रावणः = दशमुखः, वार्यमाणः = निवारितः, अभूदिति शेषः । तु = किन्तु । तदा = तस्मिन् काले, रावणः = दशमुखः, कालचोदितः = आसन्नभाविमरणेन प्रेरितः, सन्निति शेषः । तद्वाक्यं = मारीवचनम् , अनादृत्य = अस्वीकृत्य, सहमारीचः = मारीचेन सह वर्त्तमानः, तस्य = रामस्य, आश्रमपदम् = पञ्चवटीस्थानान्तिकम् , जगाम = गतवान् ।

समासादि—कालेन भाविनिकटमृत्युना चोदितः प्रेरित इति कालचोदितः । मारीचेन सह वर्त्तत इति सहमारीचः, सहयोगे तृतीयेति । आश्रमस्य पदमाश्रमपदन्तद् ।

व्याकरणम्—वार्यमाणः = वारि + यक् + शानच् । अनादृत्य = नञ् + आङ् + दृ + ल्यप् । जगाम = गम् + लिट् ।

वाच्यान्तरम्—सहमारीचेन रावणेनाश्रमपदं जग्मे ।

कोषः—'विरोधो वैरभावः स्यात्कलहाङ्कुर इत्यपि' इति शब्दबोधः ।
'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः ।
'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' इत्यमरः ।
'साकं सत्रा समं सह' इत्यमरः ।

सारार्थः—अहो रावण ! यदुक्तं भवता तत्तद्वीर्यप्रभावाज्ञानेन, प्रभो ! जानामि तद्बलं, एकबाणेनैवाहं विश्वामित्रस्य मुनेराश्रमादिह सागरपारे पतितः, एतदेव, बहु मन्ये यत्प्राणा न गताः, अतो मम वाक्यं सत्यमेव मत्वा निवर्त्तस्व, अन्यथा मम प्राणा यास्यन्त्येव भवतोऽपि तिलाञ्जलिदायकः कुले कोऽपि न स्थास्यतीति बहुशो निवारितोऽपि रावणः प्रकृत्या हठी तदुपदेशं मुमूर्षुरौषधमिवानादृत्य, स्वसाहाय्यार्थं मारीचं सङ्गे कृत्वा रामाश्रमसमीपं गतवान् ।

भाषाऽर्थः—'हे ! महाराज रावण ! बलवान् उन रामचन्द्रजी के साथ आपका विरोध करना ठीक नहीं है' ऐसा कह कर ( यद्यपि ) बहुत प्रकारसे मारीचसे वह रावण, रोका गया किन्तु उस समय ( चेतावनी के समय ) रावण काल से प्रेरित होता हुआ मारीच के वचनों का अनादर करके उसे ( मारीच को ) साथ लेकर उन रामजी के आश्रम की तरफ गया ॥ ५० ॥५१ ॥

तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥
जहार भार्यां रामस्य, गृध्रं हत्वा जटायुषम् ।

अन्वयः—मायाविना, तेन, नृपात्मजौ, दूरम्, अपवाह्य, रामस्य, भार्यां, जहार, ( ततः सीतां हृत्वा पलायमानमात्मानं विरोधयन्तम् ) जटायुषं, गृध्रं, हत्वा, ( लङ्कां प्रापयामासेति शेषः ) ।

व्याख्या—मायाविना = नानाविधकपटपटुना, तेन = मारीचेन, काञ्चनमयमृगवेषधारिणेत्यर्थः । नृपात्मजौ = राजकुमारौ, रामलक्ष्मणौ । दूरं = दीर्घमध्वानम्, स्वमृगयाऽभिलाषया अपवाह्य = अपसार्य, तावत् तापसभिक्षुकवेषं धृत्वा रावणोऽसहायिनीम् । रामस्य = प्रसिद्धस्य भार्याम् = भर्तुर्योग्याम्, सीतां विलपन्तीमपि । जहार = हृतवान्, चोरवदिति भावः । तदनन्तरं सीताविमोचनायोपस्थितम् । जटायुषम् = तन्नामकं, गृध्रं = मांसाशिमहापक्षिजातिविशेषम्, सम्पातिभ्रातरम् । हत्वा = मरणपर्यवसायिनीं हिंसां विधाय, लङ्काऽभिमुखं प्रस्थित इति ।

समासादि—'मायाऽस्यास्तीति मायावी, तेन मायाविना । नृपस्यात्मजौ नृपात्मजौ तौ ।

व्याकरणम्—अपवाह्य = अप + वह् + णिच् + ल्यप् । जहार = हृ + लिट् । हत्वा = हन् + क्त्वा ।

वाच्यान्तरम्—रावणेन रामस्य भार्या जह्रे ।

कोषः—'मायावी कपटी धूर्तो विलाडव्रतिकस्तथा' इति शब्दरत्नाकरः ।
'दाक्षाय्यगृध्रौ' इत्यमरः ।

सारार्थः—पूर्वं यावत् 'कपटकाञ्चनरूपमयं मां दृष्ट्वा नियतं मृगयाऽर्थी रामो ममानुगमं करिष्यत्येव, ततो रामस्वरेण 'हा लक्ष्मण ! हतोऽहमनेन' एवमाक्रुश्यमाने मयि नियतं सीतां विहाय स्वयं वा सीतया सशङ्कया प्रेरितो लक्ष्मणो राममनुधावन् यदा दूरं यास्यति, तदाऽसहायिनीं सीतां भवान् हरिष्यति' एवं संमन्त्र्य रामलक्ष्मणौ मारीचेन दूरं निःसारितौ तावद् रावणेन विलपन्ती सीताऽपहृता, तामादाय प्रस्थितस्य रावणस्याभिमुखं जटायुरागत्य मार्गावरोधं कृतवान्, तथाविधं विघ्नकरं तं मृतप्रायं विधाय पुनः सीतामादाय लङ्काऽभिमुखं रावणो गतवान् ।

भाषाऽर्थः—माया के जानने वाले उस मारीच के द्वारा राम और लक्ष्मण को दूर हटा कर, ( पीछे ) रामजी की स्त्री सीता जी का ( रावण ने ) हरण किया, ( उस के बाद सीता जी को हरण कर के भागते हुये अपनेको मार्ग में रोकते हुये ) जटायु नामक गृध्र को मार कर ( लङ्का की तरफ चल पड़ा ) ॥ ५२ ॥

गृध्रं च निहतं दृष्ट्वा, हृतां श्रुत्वा च मैथिलीम् ॥ ५३ ॥
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ।

अन्वयः—राघवः, गृध्रं, च, निहतं, दृष्ट्वा, हृतां, मैथिलीं, च, श्रुत्वा, शोकसन्तप्तः, आकुलेन्द्रियः, ( सन् ) विललाप ।

व्याख्या—राघवः = रघुवंश्यः, राम इति यावद् । मारीचं हत्वा प्रतिनिवर्त्तमानः पञ्चवट्यां सीतां न दृष्ट्वा, शङ्कितचित्तः, इतस्ततो यावदन्वेषमकरोत्, तावत् । गृध्रं = जटायुर्नामानं निहतं = दूरतो मृतमिव निश्चेष्टम्, समीपगमनेनासन्नमरणं, दृष्ट्वा = अवलोक्य, तन्मुखाद् रावणेन । हृतां = चोरितां, मैथिलीं च = सीतामपि, श्रुत्वा = निशम्य, शोकसन्तप्तः = दुःखदग्धः, अत एव । आकुलेन्द्रियः = विकलकरणः, सन् । विललाप = परिदेवनमकरोत । हा सीते मां विहाय क्व गताऽसि, किं कथयिष्यामि मातरं, श्वशुरं, वा, अहो मया महान् प्रमादो विहितः, एवं करुणाक्रन्दनमकरोत् ।

समासादि-शोकेन सन्तप्तः शोकसन्तप्तः । आकुलानीन्द्रियाणि यस्य स आकुलेन्द्रियः।

व्याकरणम्—निहतं = नि + हन् + क्तः । दृष्ट्वा = दृश् + क्त्वा । हृतां = हृ + क्तः + टाप् + अम् । श्रुत्वा = श्रु + क्त्वा । विललाप = वि + लप् + लिट् ।

वाच्यान्तरम्—राघवेण विलेपे ।

कोषः—'आतायिचिल्लौ दाक्षाय्यगृध्रौ' इत्यमरः ।

सारार्थः—मृगयानिवृत्तो रामः पञ्चवट्यां सीतामदृष्ट्वा संशयमापन्न इतस्ततो यावदन्वेषणं करोति तावद् गतप्राणसदृशं गृध्रमेकं तथा भग्नं रथं चावलोक्य महान् हेतुरत्र भविष्यतीति धिया तत्समीपं गत्वा तन्मुखान्निखिलं वृत्तं सीताहरणात्मकं विदित्वा स्त्रीविरहदुःखदग्धः सन् समधिकं विललापेति ।

भाषाऽर्थः—रघुवंशी रामजी ( शिकार से लौटने पर, पञ्चवटी में सीता को न देख इधर उधर उसे ढूंढते हुए, जब आगे बढ़े तो ) गृध को मरा हुआ अर्थात् दूर से मरे हुये के समान निश्चेष्ट और समीप जाने से मरने के करीब पहुंचा हुआ देख, (उससे रावण के द्वारा) हरण की गई सीता को सुनकर अत्यन्त दुःखी, हो व्याकुल इन्द्रिय वाले होते हुये अर्थात् घबड़ाते हुये विलाप करने लगे ॥ ५३ ॥

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५४ ॥
मार्गमाणो वने सीतां राक्षसं स ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५५ ॥

अन्वयः—ततः, तेन, एव, शोकेन, ( व्याप्तः सन् ) जटायुषं, गृध्रं, दग्ध्वा, (ततः) वने, सीतां, मार्गमाणः, सः,( रामः ), रूपेण, विकृतं, घोरदर्शनम् , कबन्धं, नाम, राक्षसं, ददर्श, ह ।

व्याख्या—ततः = जटायुर्मुखात्सीताहरणवृत्तान्तश्रवणानन्तरं, तेनैव = सीताहरणजनितेनैव, शोकेन = शुचा, व्याप्तः सन्निति शेषः । जटायुषम् = तन्नामकम् , गृध्रम् = दाक्षाय्यम् , दग्ध्वा = प्रज्वाल्य, तस्यौर्ध्वदैहिकीं क्रियां कृत्वा, पक्षिभ्यो मांसादिभक्ष्यभोज्यं दत्वा । (ततः) वने = दण्डकारण्ये, सीतां = जानकीं, मार्गमाणः = अन्विष्यन् , सः = रामः, रूपेण = आकारेण, विकृतम् = विकारयुक्तं, कुक्षिनिक्षिप्तमस्तकमित्यर्थः। (अत एव) घोरदर्शनम् = भयङ्कराकारं, कबन्धं नाम = कबन्धनाम्ना प्रसिद्धम् , राक्षसं = कौणपं, ददर्श = अवलोकयामास, ह = इतिप्रसिद्धौ, इन्द्रवज्रप्रहारेण तच्छिरोग्रीवा तदुदरमध्येऽन्तर्भूता, अतो ग्रीवाहीनस्य कबन्ध इति युक्तं नाम ।

समासादि—घोरं दर्शनं यस्य स घोरदर्शनस्तम् ।

व्याकरणम्—दग्ध्वा = दह् + क्त्वा । ददर्श = दृश् + लिट् ।

वाच्यान्तरम्—तेन राक्षसो ददृशे ।

कोषः—'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आसरः' इत्यमरः ।
'शिरोहीनः शिरोऽधोऽङ्गः कबन्धः कथ्यते बुधैः' इति ।

सारार्थः—ततः सीताहरणवार्त्ताकथनोत्तरं मृतस्य जटायुषः शरीरं दग्ध्वा, तस्य सद्गतिलाभाय तज्जातिपक्षिभ्यो मृगमांसादिकं समर्प्य, तस्मान्निवृत्तः सीतामन्वेषयन्नग्रे भयङ्करं कबन्धं ददर्श ।

भाषाऽर्थः—उसके ( जटायु के मुख से सीता के हर जाने का वृतान्त सुनने के ) बाद उसी सीता हरण जन्य दुःख से भरे हुये अर्थात् बड़े शोक के साथ ( मरे हुये ) जटायु को जला कर वन में सीता को ढूंढ़ते हुए वे रामजी ( जैसे ही आगे बढ़े तैसे ही, एक ) विकृत रूप वाला ( जिसका मस्तक इन्द्र के वज्र प्रहार से पेट में घुस गया था ) ऐसा देखने में भयङ्कर कबन्ध नामक राक्षस को देखा ॥५४॥५५ ॥

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।
स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ ५६ ॥
श्रमणीं धर्मनिपुणामभिगच्छेति राघव ! ।

अन्वयः—महाबाहुः, तं, निहत्य, ददाह, सः, च, स्वर्गतः, सः, च, हे राघव !, धर्म निपुणां, श्रमणीं, धर्मचारिणीं, शबरीम् , अभिगच्छ, इति अस्मै, कथयामास ।

व्याख्या—महाबाहुः = आजानुलम्बितभुजः, ( रामः ), कबन्धभुजान्तर्गतं व्यक्तित्रयम- वलोक्य, तं = कबन्धं राक्षसं, निहत्य = संहृत्य, ततः संजातदिव्यरूपस्य तस्य प्रार्थनया तस्य पूर्वदेहं, ददाह = दग्धवान् । सः = कबन्धः, च = अपि, स्वः = स्वर्गं, गतः = प्राप्तः । परन्तु चलनसमये। सः = दिव्यगन्धर्ववेषधारी, च = अपि, हे राघव ! = हे रघुवंश्य राम!, धर्मनिपुणां = परमधर्मज्ञाम् , अतएव। श्रमणां = परिव्राजिकां, तपस्विनीमिति यावद् । अत एव । धर्मचारि = परमधर्माचरणरतां, शबरीं = विलोमस्त्रियं, नीचजातिमिति यावद् । अभिगच्छ = आभि मुख्येन गच्छ, तत्समुखं याहीत्यर्थः । इति = एतद् , अस्य = अस्मै, रामायेत्यर्थः । कथ- यामास = उक्तवान् ।

समासादि—महान्तौ बाहू यस्य स महाबाहुः । धर्मं चरितुं शीलमस्या इति धर्म चारिणी, तां धर्मचारिणीम् । धर्मे निपुणा धर्मनिपुणा, तां धर्मनिपुणाम् ।

व्याकरणम्—निहत्य = नि + हन् + ल्यप् । ददाह = दह् + लिट् । कथयामास = कथ + णिच् + लिट् । अभिगच्छ = अभि + गम् + लोट् ।

वाच्यान्तरम्—महाबाहुना तेन देहे तेन च स्वर्जग्मे, तेन शबरी कथयाञ्चक्रे ।

कोषः—स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इत्यमरः ।

'नृपाणां वैश्यतो जातः शबरः परिकीर्तितः ।
मधूनि वृक्षान्यादाय विक्रीणीते स्ववृत्तये ॥' इति नारदीयम् ।

सारार्थः—महापराक्रमी रामः, कबन्धं हत्वा, पश्चाद्गन्धर्वरूपधारिणस्तस्य प्रार्थनया, तस्य प्राक्तनं शरीरं ददाह, अथ स गन्धर्वो रामाय शबरीपरिचयं दत्वा, तस्यै दर्शनं देहीति सानुन यमुक्त्वा स्वयं सत्वरमेव स्वर्गं प्रस्थितः ।

भाषाऽर्थः—आजानुबाहु रामचन्द्र ने उस कबन्ध को मारकर जलाय दिया बाद को व स्वर्ग को गया, और दिव्य गन्धर्व वेष धारण करके ( स्वर्ग को जाते हुये ) उसने 'हे राम जी ! परमधर्म को जानने वाली अत एव संन्यासिनी अत एव परमधर्म का आचरण कर वाली भीलिनी के पास आप जावैं' ऐसा उन ( राम जी ) से कहा ॥ ५६ ॥

सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ५७ ॥
शबर्या पूजितः सम्यग् रामो दशरथात्मजः ।
पम्पातीरे हनुमता सङ्गतो वानरेण ह ॥ ५८ ॥

अन्वयः—महातेजाः, शत्रुसूदनः, सः, शबरीम् , अभ्यगच्छत् , (ततः), शबर्या, सम्यक् पूजितः, (आसीत् ) दशरथात्मजः, रामः, पम्पातीरे, वानरेण, हनुमता, संगतः, (आसीत् ) ह

व्याख्या—महातेजाः = अतितेजस्वी, शत्रुसूदनः = रिपुसंहारकः, सः = रामः, शबरीम् = ए तन्नामिकां, स्वभक्तिमतीम् । अभ्यगच्छत् = अभिजगाम । ततः । शबर्या = एतन्नामिकया सम्यक् = उत्तमरूपेण, भोजनाद्युपचारेणेति शेषः । पूजितः = सत्कृतः । आसीदिति शेषः । एतावत्पर्यन्तमारण्यकाण्डकथाबीजम् । अतः परं किष्किन्धाकाण्डकथाऽस्ति । तदन- न्तरम् । दशरथात्मजः = दशरथपुत्रः, रामः, = भरताग्रजः, पम्पातीरे = पद्मसरस्तीरे, वानरे- ण = कपिना, हनुमता = एतन्नाम्ना, संगतः = सम्मिलितः, आसीदिति शेषः । ह = इति हर्षे ।

समासादि—महत् तेजो यस्यासौ महातेजाः । शत्रून् सूदयतीति शत्रुसूदनः । दशरथस्या-

त्मजो दशरथात्मजः । पम्पायास्तीरं पम्पातीरं तस्मिन् पम्पातीरे ।

व्याकरणम्—अभ्यगच्छत् = अभि + गम् + लङ् । पूजितः = पूज् + क्तः ।

वाच्यान्तरम्—महातेजसा तेन शबरी अभ्यगम्यत ।

कोषः—'हरिः कपिर्वानरो शाखामृगः' इति कोषः ।

सारार्थः—कबन्धकथनाद् शबर्याः समीपं गतस्तया सादरं कृतसत्कारो रामः पम्पातीरे हनुमता च संगतो बभूव ।

भाषाऽर्थः—अत्यन्त तेजस्वी, शत्रुसंहार करने वाले, वे रामजी शबरी के यहां गये, और शबरी से अच्छी तरह से पूजित हुये बाद दशरथ के पुत्र रामजी (जैसे ही आगे बढे, कि तसे हीं) पम्पासरोवर के किनारे वानर हनुमान्‌जी से मिले ॥ ६७ ॥ ६८ ॥

हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ॥ ५६ ॥
आदितस्तद्यथा वृत्तं सीतायाश्च विशेषतः ।

अन्वयः—हनुमद्वचनात्, च, एव, सुग्रीवेण, समागतः (ततः) महाबलः, रामः, सुग्रीवाय आदितः, तत्, (स्वकीयं), सर्वं, सीतायाश्च, (तत् सर्वं हरणरूपं) वृत्तं, विशेषतः, यथा, शंसत् ।

व्याख्या—हनुमद्वचनाद् = हनुमतः साग्रहानुनयनिवेदनात्, च, = अपि, एव = निश्चयेन, सुग्रीवेण = एतन्नाम्ना वालिसहजेन, समागतः = सम्मिलितः, ततोऽग्निसाक्षिके सिद्धे सौहार्दे । महाबलः = अतिबलशाली, रामः, = भरताग्रजः, सुग्रीवाय = वालिसहजाय, आदितः = स्वजन्मतः प्रभृति, तत् = स्वकीयं वनवासगमनादिकं, सर्वं = निःशेषं, तथा च । सीतायाः = जानक्याः, च = अपि, तद् = हरणादिकं सर्वम् । वृत्तं = वृत्तान्तं, विशेषतः = विस्तरतः, यथा = यथावद्, शंसत् = अशंसत्, अकथयत् ।

समासादि—हनुः (इन्द्रवज्रप्रहारेण विकृतः) यस्य स हनुमान्, तस्य यद्वचनं, तस्माद्धनुमद्वचनात । सुन्दरी ग्रीवा यस्य स सुग्रीवः । महद् बलं यस्यासौ महाबलः ।

व्याकरणम्—समागतः = सम् + आङ् + गम् + कर्तरि क्तः । शंसत् = शंस् + लङ् । आर्षत्वादडभावः ।

वाच्यान्तरम्—महाबलेन रामेण सर्वं वृत्तमशस्यत ।

कोषः—'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्' इत्यमरः ।

सारार्थः—हनुमतः परिचयेन सुग्रीवेण सह रामस्य परिचयो जातः, ततो रामो बाल्यात्प्रभृति वनगमनावधि स्वस्य, तथा सीतायाश्च हरणादिकं सर्वं वृत्तं सुग्रीवायाकथयत् ।

भाषाऽर्थः—हनुमान जी के वचन से, ही सुग्रीव से जान पहचान होने पर महाबली राम जी ने, सुग्रीव से शुरू से वह सब वनवास गमन आदिक अपना तथा सीता जी का भी हरण आदिक जो वृत्तान्त था (वह सब) विस्तार पूर्वक जैसा का तैसा कहा ॥ ६९ ॥

सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ ६० ॥
(१)चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ।

---

(१) अत्र बहवो जना एवं शङ्कां कुर्वते, यद् यथैवानुजवधूगामी वाली पातकी, तथैव ज्येष्ठजायाविहारी सुग्रीवोऽपि पातकी आसीत् (यदा दुन्दुभिदैत्यहननाय सुग्रीवेण सह वाली गतवान्, तदा तत्समयातिक्रमं विज्ञाय, रुधिरधाराऽवलोकनभीतः सुग्रीवस्तत आगत्य तारां वालिपत्नीं स्वशय्यायामारोपितवान् ।) तदा कथं सुग्रीवेण मैत्री, वालिना वैरमित्युच्यते । तत्रोत्तरम्, रामस्य दयिताविरहदुःखं दयिताविरही सुग्रीव एव ज्ञास्यति, न तु तथा सस्त्रीको वाली, तथा च सुग्रीवः सूर्यपुत्रत्वेन सगोत्र आसीत् । अथवा तदानीं 'देवराच्च सुतोत्पत्तिः' इति व्यवहार आसीदतो वाली एव रामेण हत इति ।

अन्वयः—च, वानरः, सुग्रीवः, अपि, रामस्य, तत्, सर्वं, श्रुत्वा, प्रीतश्च, रामेण, ( सह ) एव, अग्निसाक्षिकं, सख्यं, चकार ।

व्याख्या—च = समुच्चयार्थे, वानरः = कीशः, सुग्रीवः = एतन्नामकः, अपि = निश्चयेन, रामस्य = भरताग्रजस्य, तत् = स्ववृत्तं, सीताऽपहरणवृत्तं च, सर्वं = निखिलम्, श्रुत्वा = निशम्य, प्रीतः = प्रसन्नः, च = अपि, निर्व्याजसकलरहस्यनिवेदनेन प्रीतेरुत्पत्तिः सहजैवेति । रामेण = भरताग्रजेन, ( सह ) एव = निश्चयेन, अग्निसाक्षिकम् = अग्निमध्यस्थताकं, सख्यम् = मित्रत्वम्, चकार = कृतवान् । अत्र यथाऽहं स्त्रीविरहितस्तथैवायमपीति तुल्यदुःखपीडितत्वाद् मिथो मैत्री जाता ।

समासादि—अग्निः साक्षी द्रष्टा यस्मिँस्तत् कर्म-अग्निसाक्षिकम् ।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा । चकार = कृ + लिट् ।

वाच्यान्तरम्—रामेण सह सुग्रीवेण सख्यं चक्रे ।

कोषः—'मर्कटो वानरः कीशः' इत्यमरः ।

'साक्षी द्रष्टा समक्षस्थः' इति कोषः ।

सारार्थः—रामस्य सर्वमशेषतो वृत्तान्तं श्रुत्वा, सुग्रीवोऽग्निं साक्षीकृत्य रामेण सह मैत्रीं संयोजितवान् ।

भाषाऽर्थः—और वानर सुग्रीव ने, भी रामजी का वह सब ( सीता हरणादिक वृत्तान्त ) सुन कर और प्रसन्न होता हुआ रामजी के साथ निश्चित रूप से अग्नि को साक्षी रख कर मैत्री की ॥ ६० ॥

ततो वानरराजेन वैरानुकथनं प्रति ॥ ६१ ॥
रामायावेदितं सर्वं प्रणयाद् दुःखितेन च ।

अन्वयः—ततः, दुःखितेन, वानरराजेन, वैरानुकथनं प्रति, सर्वं, प्रणयात्, च, रामाय आवेदितम् ।

व्याख्या—ततः = मिथो मित्रत्वयोजनानन्तरं, दुःखितेन = कृतदुःखसूचकचेष्टितेन, वानरराजेन = सुग्रीवेण, वैरानुकथनं प्रति = शत्रुत्वहेतुप्रश्नं प्रति, कथं ज्येष्ठेन बलवता वालिना तव विरोधो वृद्ध इति रामप्रश्नं प्रति उत्तरमित्यर्थः । सर्वं = सकलं, स्पष्टतया । प्रणयात् = स्नेहाद्, वा-विश्वासात् । च = एव, रामाय = भरताग्रजाय, आवेदितम् = निवेदितम् ।

समासादि—वानराणां राजा वानरराजस्तेन वानरराजेन । वैरस्य वालिविरोधस्यानुकथनमनुकूलकथनमिति वैरानुकथनं तद् ।

वाच्यान्तरम्—वानरराजः सर्वमावेदितवान् ।

कोषः—'प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः ।

सारार्थः—ततो जाते सख्ये, कथं तव वालिना विरोधो जात इति रामेण पृष्टे, आदितो दुन्दुभिवधादि सर्वं तस्मै सुग्रीवेण निवेदितम् ।

भाषाऽर्थः—उसके बाद ( राम, सुग्रीव इन दोनों में मित्रता होने पर) दुःखित वानरों के राजा सुग्रीव ने कैसे बालि के साथ दुश्मनी हुई, यह रामजी के प्रश्न के उचित प्रत्युत्तर में सब खुलासा हाल विश्वास होने से, ही रामजी से कह दिया ॥ ६१ ॥

प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ ६२ ॥
वालिनश्च बलं तत्र कथयामास वानरः ।
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६३ ॥

अन्वयः—तदा, रामेण, च, बालिवधं, प्रति, प्रतिज्ञातम्, (किन्तु) सुग्रीवः, नित्यं, राघवे वीर्येण, शङ्कितः, च, आसीत्, तत्र, वानरः, बालिनः, बलं, च, कथयामास ।

व्याख्या—तदा = सुग्रीवदुःखश्रवणसमय एव, रामेण = भरताग्रजेन, च, = भिन्नक्रमसूचकः, बालिवधं प्रति = सुग्रीवस्य विरोधिनो ज्येष्ठभ्रातुर्हननमुद्दिश्य, प्रतिज्ञातम् = संकल्पितम्, अवश्यमेवाहं तत्र शत्रुरूपं भ्रातरं हनिष्यामीति प्रतिज्ञा कृतेति। परन्तु। सुग्रीवः = वालिसहजः, (यतः)नित्यं = सदा, राघवे = रामे, वीर्येण = विक्रमेण, शङ्कितं = सन्दिग्धः, च = एव, आसीत् = अभूत्, (अत एव) तत्र = किष्किन्धायाम्, वानरः = सुग्रीवः, वालिनः = स्वरिपोः, बलम् = वीर्यम्, अरुणोदयानन्तरं सूर्योदयात्प्रागेव रावणं गृहीत्वा चतुःसमुद्रलंघनादिरूपम् च = अपि, कथयामास = उक्तवान् ।

समासादि—वालिनो वधो वालिवधस्तं वालिवधम् ।

व्याकरणम्—प्रतिज्ञातः = प्रति + ज्ञा + क्तः । कथयामास = कथ + णिच् + लिट् । आसीत् = अस् + लङ् ।

वाच्यान्तरम्—रामः प्रत्यज्ञासीद्, वानरेण वालिनो बलं कथयाञ्चक्रे, सुग्रीवेण शङ्कितेनाभूयत ।

कोषः—'सततेऽनारताश्रान्तसन्ततावितरतानिशम् ।
नित्यानवरताजस्रम्' इत्यमरः ।

सारार्थः—सुग्रीवदुःखहेतुं श्रुत्वा रामेण प्रतिज्ञातं 'यदहं सत्वरमेव तत्र शत्रुं हनिष्यामि' एवं प्रतिज्ञां श्रुत्वा सुग्रीवस्य हृदि सन्देह उत्पन्नोऽभूद् यदयं रामो वालिना समो वीर्येऽस्ति न वेति हेतो रामाय रावणतोलनरूपं वालिनो विनोदं, वा-वक्ष्यमाणं विक्रमं कथयामास ।

भाषाऽर्थः—तब ( सुग्रीव के दुःख को सुन कर ) राम ने भी वाली के मारने के उद्देश्य से प्रतिज्ञा की, परन्तु सुग्रीव भी राम बलमें वाली के समान हैं, या नहीं, इस सन्देह में पड़ा हुआ था, अत एव उसने वाली का पराक्रम, ( कैसे रावण को बगल में दबाकर चारो ओर समुद्र लांघ आया था सो ) कहा ॥ ६२ ॥ ६३ ॥

राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६४ ॥

अन्वयः—सुग्रीवः, राघवप्रत्ययार्थं, तु, महापर्वतसन्निभम्, उत्तमं, दुन्दभेः, कायं, दर्शयामास ।

व्याख्या—सुग्रीवः = वालिसोदर्यः, राघवप्रत्ययार्थं = रामविश्वासार्थं, वाली कीदृशो बली वर्त्तत इति बोधनायेत्यर्थः । तु = एव, महापर्वतसन्निभम् = अतिविशालशैलसदृशम्, उत्तमम् = उन्नतं, वा-बलप्रत्यायने परमं निमित्तम् । दुन्दुभेः = एकन्नामकस्य राक्षसस्य, कायं = शरीरम्, अस्थिमात्रावशेषमपि । दर्शयामास = अदर्शयत् ।

समासादि—राघवस्य प्रत्ययो राघवप्रत्ययस्तस्यार्थं राघवप्रत्ययार्थम् । महांश्चासौ पर्वतो-महापर्वतस्तेन सन्निभ इति महापर्वतसन्निभस्तं महापर्वतसन्निभम् ।

व्याकरणम्—दर्शयामास = दृश् + णिच् + लिट् ।

वाच्यान्तरम्—उत्तमो दुन्दभेः कायः सुग्रीवेण दर्शयाञ्चक्रे ।

कोषः—'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः ।
'शैलोऽद्रिः पर्वतो नागः' इति शब्दार्णवः ।
'सदृशः सन्निभः समः' इति शब्दार्णवः ।

सारार्थः—वाली मद्भ्राता कीदृशो बलवानिति रामस्य विश्वसार्थं दुन्दुभेरत्युन्नतमस्थिकङ्कालं तस्मै दर्शयामास, अर्थाद्-गलितेऽपि मांसादौ यस्येदृशमस्थिपञ्जरमस्ति, तं हत्वा, एकहस्तेनोत्तोल्य मतङ्गमुनेराश्रमेऽत्र वालिनोत्क्षिप्तम्, अनेनैव तद्विक्रमं जानीहि ।

भाषाऽर्थः—सुग्रीव ने राम को विश्वास दिलाने के लिये कि वाली कैसा बलवान् है

भारी पर्वत के ऐसे उन्नत अथवा वाली के बल का द्योतक (मरे हुए) दुन्दुभि दानव के शरीर को दिखाया ॥ ६४ ॥

**उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।**
**पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥ ६५ ॥**

अन्वयः—महाबाहुः, महाबलः, अस्थि, प्रेक्ष्य, च, उत्स्मयित्वा, पादाङ्गुष्ठेन, सम्पूर्णं दशयोजनम्, चिक्षेप ।

व्याख्या—महाबाहुः = विशालभुजः, महाबलः = अपरिमेयबलः, (रामः) (अग्रे दुन्दुभेः) अस्थि = कुल्यम्, प्रेक्ष्य = विलोक्य, च = पुनः, उत्स्मयित्वा = ओः कियन्मात्रमेतद्, इत्यनादरेणेषद्धासं कृत्वा पादाङ्गुष्ठेन = चरणाङ्गुष्ठेन, अवहेलयेति भावः । सम्पूर्णम् = अन्यूनम्, दशयोजनम् = चत्वारिंशत्कोशमितं दूरं, चिक्षेप = निःक्षिप्तवान् ।

समासादि—महान्तौ बाहू यस्य स महाबाहुः । पादस्याङ्गुष्ठं पादाङ्गुष्ठम्, तेन पादाङ्गुष्ठेन ।

व्याकरणम्—उत्स्मयित्वा = उद् + स्मीङ् + क्त्वा । प्रेक्ष्य = प्र + ईक्ष् + ल्यप् । चिक्षे = क्षिप् + लिट् ।

वाच्यान्तरम्—महाबलेन रामेण चिक्षिपे ।

कोषः—'कीकसं कुल्यमस्थि च' इत्यमरः ।
'पदपादाङ्घ्रिचरणाः' इति कोषः ।

सारार्थः—महाबलो रामः सुग्रीवं शङ्कितं ज्ञात्वा पुरःस्थितं दुन्दुभेरस्थिपञ्जरं दृष्ट्वा, अ कियदेतदिति विहस्य, चरणाङ्गुष्ठेन तद् दशयोजनान्तरे चिक्षेप ।

भाषाऽर्थः—लम्बी भुजा वाले बड़े बलवान् (राम सुग्रीव के सन्देह को समझ कर दुन्दभि के) हड्डी को देख और (अरे यह कितना है ऐसा अनादर दिखाते हुए) थो हंस कर पांव के अंगूठे से (उसको) पूरे दशयोजन (चालीस कोश) की दूरी फेंक दिया ॥ ६५ ॥

**बिभेद च पुनः (१) सालान् सप्तैकेन महेषुणा ।**
**गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ ६५ ॥**

अन्वयः—तदा, पुनः, प्रत्ययं, जनयन्, एकेन, महेषुणा, सप्त, सालान्, गिरिं, रसा च, एव, बिभेद ।

व्याख्या—तदा = तदानीं, सुग्रीवसन्देहदूरीकरणावसरे । पुनः = भूयः, (सुग्रीवस्य चि प्रत्ययं = विश्वासम्, जनयन् = उत्पादयन्, (रामः) एकेन = अद्वितीयेन, एकमात्रेणेत्यर्थ महेषुणा = दिव्यशरेण, सप्त = सप्तसंख्याकान्, सालान् = सर्जवृक्षान्, क्व चित् । तालान् तृणराजान्, गिरिं = पर्वतं, रसातलं = पातालं, च = अपि, एव = निश्चयेन, बिभेद = अभिनत्

समासादि—महांश्चासाविषुर्महेषुस्तेन महेषुणा ।

व्याकरणं—बिभेद = भिद् + लिट् । जनयन् + जन् + णिच् + शतृ ।

वाच्यान्तरम्—रामेणैकेन महेषुणा सप्त ताला बिभिदिरे ।

कोषः—'तृणराजाह्वयस्तालो नारिकेरस्तु लाङ्गली' इत्यमरः ।
'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः ।
'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः ।

सारार्थः—सुग्रीवस्य विश्वासोत्पादनाय रघुनाथ एकेन बाणेन सप्त तालान्, पर्वतं

---

(१) तालानित्यपि पाठः ।

भिन्दन् रसातलं च बिभेद, अनेन वालिनोऽधिकबलवान् राम इति सुग्रीवस्य विश्वासो जातः।

भाषाऽर्थः—तब फिर से ( सुग्रीव के चित्त में ) विश्वास दिलाते हुए ( राम ने ) एक ही (दिव्य) बाण से, बड़े सात ताड़के पेड़ों को, और पर्वत तथा पाताल को भी छेद दिया ॥६६॥

ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।
किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥

अन्वयः—ततः, प्रीतमनाः, तेन, विश्वस्तः, महाकपिः, सः, रामसहितः, ( सन् )तदा, च, किष्किन्धां, गुहां, जगाम ।

व्याख्या—ततः = रामपराक्रमदर्शनानन्तरम् , प्रीतमनाः = प्रसन्नचित्तः, तेन = कर्मणा, सप्ततालोच्छेदनादिरूपेण । विश्वस्तः = विश्वासं प्राप्तः, महाकपिः = वानरश्रेष्ठः, सः = सुग्रीवः, रामसहितः = भरताग्रजयुक्तः, (सन् ) तदा = तत्क्षणे, च = अपि, किंष्किन्धाम् = एतन्नामिकाम् , गुहाम् = गह्वरम् , वालिराजधानीमिति भावः । प्रति । जगाम = ययौ ।

समासादि—प्रीतं मनो यस्यासौ प्रीतमनाः । महांश्चासौ कपिर्महाकपिः । रामेण सहितो रामसहितः ।

व्याकरणम्—विश्वस्तः = वि + श्वस् + कर्तरि + क्तः । जगाम = गम् + लिट् ।

वाच्यान्तरम्—विश्वस्तेन तेन सुग्रीवेण किष्किन्धा जग्मे ।

कोषः—'कपिः प्लवङ्गप्लवगशाखामृगबलीमुखाः ।
मर्कटो वानरः कीशो वनौकाः' इत्यमरः ।
'गह्वरं गुहा' इति कोषान्तरम् ।

सारार्थः—सुग्रीवस्तु रामस्य पराक्रमं विलोक्य, अवश्यमयं वालिहननयोग्य इति जातविश्वासेन परमप्रसन्नः परहस्तगतं सस्त्रीकं राज्यं पुनर्हस्तगतमिव मन्यमानः, वालिविजयाय रामेण सह किष्किन्धां स्वराजधानीं प्रति जगामेति ।

भाषाऽर्थः—उसके ( रामजी का पराक्रम देख चुकने के ) बाद प्रसन्न मन वाला होता हुआ उस तालों के बेध कर देने रूप कार्य से जिसे विश्वास हो गया था ऐसा वह वानरों में बड़ा (श्रेष्ठ) सुग्रीव रामजी के साथ (हो कर) उसी समय किष्किन्धा नाम की गुहा की तरफ ( वाली के ऊपर चढ़ाई करने को ) चला ॥ ६७ ॥

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८ ॥

अन्वयः—ततः, हेमपिङ्गलः, हरिवरः, सुग्रीवः, अगर्जत् , तेन, महता, नादेन, हरीश्वरः, (च) निर्जगाम ।

व्याख्या—ततः = किष्किन्धागमनानन्तरं, हेमपिङ्गलः = सुवर्णवर्णः, हरिवरः = वानरश्रेष्ठः, सुग्रीवः = एतन्नामकः, अगर्जत् = जगर्ज, यथा वाली शृणोतु, तथा शब्दं चकार । पश्चात् । तेन = क्रोधसूचकेन, वा-आक्रमणसूचकेन । महता = पूर्वापेक्षयाऽधिकेन, नादेन = शब्देन, हरीश्वरः = वानराधिपतिः, वाली । च । स्वराजधानीतः । निर्जगाम = शत्रुनाशाय बहिर्गतः ।

समासादि—हरिषु वर इति हरिवरः । हेम इव पिङ्गलो हेमपिङ्गलः । हरिष्वीश्वरो-हरीश्वरः ।

व्याकरणम्—अगर्जत् = गर्ज + लङ् । निर्जगाम = निर् + गम् + लिट् ।

वाच्यान्तरम्—हरिवरेणागर्ज्यत, हरीश्वरेण निर्जग्मे ।

कोषः—'हरिरिन्द्रे हरिर्विष्णौ हरिः शाखामृगे तथा' इति कोषः ।

'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इत्यमरः ।

'पिशङ्गः कद्रुपिङ्गलौ' इत्यमरः ।

सारार्थः—रामसहायः सुग्रीवः किष्किन्धां प्राप्य, युद्धाय वालिनमाह्वयत , वाली च तत्
शब्दमनुमान्य तज्जयाय बहिः प्रस्थित इति ।

भाषाऽर्थः—उसके (किष्किन्धा जाने के) बाद सोने के समान पीत वर्ण वाले, वानरों में
श्रेष्ठ सुग्रीवने गर्जना की (कि—जिस से वाली को मालूम हो जावै) बाद को बड़े भारी उस
शब्द के होने से वानरों में श्रेष्ठ बाली भी ( अपनी रोजधानी से ) निकला ॥ ६८ ॥

अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६९ ॥

अन्वयः—तदा, ताराम्, अनुमान्य, सुग्रीवेण, समागतः, च, तत्र, राघवः, एनम् , एकेन
शरेण, निजघान ।

व्याख्या—तदा = निर्गमानन्तरं, ( सुग्रीवस्य रामेण मैत्री जातेति श्रूयते, अतोऽसौ त
त्सहायो जेतुमशक्यः, अतस्तत्र न त्वया गन्तव्यः, इति गन्तुकाममात्मानं निवारयन्तीम्
ताराम् = एतन्नामिकां स्वपत्नीम् , ( वाली ) अनुमान्य = सन्तोष्य, ( धर्मात्मा पक्षपातरहि
तो रामोऽनपराधिनं मां न हनिष्यतीत्यादिवाक्यैस्तच्चिन्तां दूरीकृत्य, पश्चात् ) सुग्रीवेण =
स्वलघुसोदरेण, (सह, युद्धार्थम्) समागतः = उपस्थितः, च = अन्वाचयेऽर्थे, तत्र = किष्किन्ध
याम्, ( जाते तयोः समरे ) राघवः = रामः, एनं = वालिनम् , आततायिनं विज्ञाय । एके
न = अद्वितीयेन, शरेण = बाणेन निजघान = हतवान् ।

व्याकरणम्—अनुमान्य = अनु + मन् + णिच् + ल्यप् । निजघान = नि + हन् + लिट् ।

वाच्यान्तरम्—राघवेणैकेन शरेण वाली निजघ्ने ।

कोषः—'हरिश्चन्द्रप्रिया तारा, तारा वालिप्रियोडु च' इति ।

'बाणः शर इषुः' इति कोषः ।

सारार्थः—अङ्गदमुखेन रामसुग्रीवयोर्मैत्रीं श्रुत्वा, तथा रामस्य सप्ततालवेधनाद्यनिर्वचनी
पराक्रमं च ज्ञात्वा, स्वामिजयाशाहीना तारा स्वसौभाग्यरक्षणेच्छया, पतिं बहिर्गन्तुमिच्छ
न्तं रुरोध, परन्तु वीरवरो वाली रामस्य निष्पक्षपाततां प्रदर्श्य, बहुविधैर्वाक्यैस्तां सन्तो
सुग्रीवेण सह युद्धार्थमागतो युयुधे, तत्र सुग्रीवं क्षीणवीर्यमालक्ष्य एकेनैव शरेण रामो वालि
हतवान् ।

भाषाऽर्थः—उसके ( अन्तःपुर से वाली के निकलने के ) बाद ( यह सुना जाता है
सुग्रीव की रामजी के साथ मैत्री हुई है, अतः यह रामजी की सहायता पाया हुआ सुग्
जीतने में अशक्य है, इस हेतु से आप न जावें, ऐसा कहकर अपने को लड़ने जाने से रोक
हुई) तारा को (राम जी धर्मात्मा पक्षपात रहित हैं, अतः निरपराध मुझे नहीं मारेंगे इत्या
वाक्यों से) समझा कर अर्थात् उसकी चिन्ता दूरकर (वाली) सुग्रीव के साथ लड़ने को आय
और वहां ( किष्किन्धा में उन दोनों में युद्ध होने पर ) राम ने एक ही शर से उस वाली
मार दिया ॥ ६९ ॥

ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ७० ॥

अन्वयः—ततः, राघवः, सुग्रीववचनाद्, आहवे, वालिनं, हत्वा, तद्राज्ये, सुग्रीवम् , ए
प्रत्यपादयत् ।

व्याख्या—ततः = युद्धानन्तरम् , राघवः = रामः, सुग्रीववचनात् = सुग्रीवकरुणवाक्याद् , आ
हवे = युद्धे, वालिनं = सुग्रीवप्रतिपक्षिणं, हत्वा = मारयित्वा, तद्राज्ये = वालिराज्ये, कपि
राज्ये वा । सुग्रीवं = वालिलघुसोदर्यम् , एव = निश्चयेन, प्रत्यपादयत् = स्थापयामास ।

समासादि—सुग्रीवस्य वचनं सुग्रीववचनं, तस्मात्सुग्रीववचनात् ।

व्याकरणम्—हत्वा = हन् + क्त्वा । प्रत्यपादयत् = प्रति + पद् + णिच् + लङ् ।

वाच्यान्तरम्—राघवेण सुग्रीवो राज्ये प्रत्यपाद्यत ।

कोषः—'भाषितं वचनं वचः' इत्यमरः ।

'आहवः समरो रणः' इति कोषः ।

सारार्थः—उपस्थिते वालिसुग्रीवयोः संग्रामे, सुग्रीवस्य पराभवसूचकं वाक्यं श्रुत्वा दुर्बलपक्षपोषकेण रामेण, एकेन शरेण वालिनं हत्वा कपिराज्यं सुग्रीवाय समर्पितम् ।

भाषाऽर्थः—बाद रामजीने सुग्रीव के कहने से, लड़ाई में वाली को मार कर, उस की राजगद्दी पर सुग्रीव को बैठाया ॥ ७० ॥

स च सर्वान् समानीय वानरान् वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ७१ ॥

अन्वयः—वानरर्षभः, सः, च, सर्वान्, वानरान्, समानीय, जनकात्मजाम्, दिदृक्षुः, दिशः, प्रस्थापयामास ।

व्याख्या—वानरर्षभः = कपिप्रधानः, सः = सुग्रीवः, च = अपि, सर्वान् = निखिलान्, राज्यवर्त्तिनः । वानरान् = कपीन्, समानीय = आहूय, जनकात्मजाम् = जानकीं, हृतामिति शेषः । दिदृक्षुः = द्रष्टुमिच्छुः, अन्वेषिषुः, क्वास्ति सा, इति ज्ञातुकामः । दिशः = चतस्र आशाः, प्रति । प्रस्थापयामास = प्रेषितवान्, सीतां दृष्ट्वाऽऽगच्छत, इत्यादिष्टवान् ।

समासादि—वानरेषु ऋषभः श्रेष्ठ इति वानरर्षभः । जनकस्यात्मजा जनकात्मजा तां जनकात्मजाम् ।

व्याकरणम्—समानीय = सम् + आङ् + नी + ल्यप् । प्रस्थापयामास = प्र + स्था + णिच् + लिट् । दिदृक्षुः = दृश् + सन् + उः ।

वाच्यान्तरम्—तेन सुग्रीवेण सर्वे वानराः प्रस्थापयामासिरे ।

कोषः—'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः ।

सारार्थः—वानराधिपतिपदे स्थितः सुग्रीवो निखिलान्वानरान् समाहूय सीताऽन्वेषणाय सर्वा दिशः प्रेषितवानिति ।

भाषाऽर्थः—वानरों के (राजा) उन सुग्रीवजी ने भी, सब वानरों को बुलाकर सीता को ढूंढने के लिये सब दिशाओं को भेजा ॥ ७१ ॥

इति किष्किन्धाकाण्डकथाबीजम् ।

---

# अथ सुन्दरकाण्डकथाऽऽरभ्यते ।

ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७२ ॥

अन्वयः—ततः, बली, हनुमान्, सम्पातेः, गृध्रस्य, वचनाद्, शतयोजनविस्तीर्णं, लवणार्णवम्, पुप्लुवे ।

व्याख्या—ततः = प्रस्थानानन्तरम्, बली = अपरिमेयबलशाली, हनुमान् = एतन्नाम्ना प्रसिद्धः, सम्पातेः = तन्नामकस्य, गृध्रस्य = दाक्षाय्यस्य, पक्षिविशेषस्य जटायुर्ज्येष्ठभ्रातुः । वचनाद् = वाक्याद्, शतयोजनविस्तीर्णं = चतुःशतक्रोशमितविस्तरं, लवणार्णवम् = क्षारसमुद्रं, पुप्लुवे = उल्लङ्घितवान् ।

समासादि—शतं योजनानि शतयोजनानि विस्तीर्णो यः, शतयोजनविस्तीर्णस्तं शतयोजनविस्तीर्णम् । लवणस्यार्णवो लवणार्णवस्तं लवणार्णवम् ।

व्याकरणम्—पुप्लुवे = प्लु + लिट् ।
वाच्यान्तरम्—हनुमता शतयोजनविस्तीर्णो लवणार्णवः पुप्लुवे ।
कोषः—'योजनं क्रोशतुर्यकम्' इति कोषः ।
'विस्तारो विस्तृतिर्मता' इति कोषः ।
'सैन्धवं लवणं क्षारम्' इति कोषः ।
'अर्णवस्तूदधिः पारावारः पाथोधिरित्यपि' इति ।

सारार्थः—दक्षिणदिशि प्रस्थितानां महतां जाम्बवदङ्गदनीलनलहनुमतां मध्ये बलवत्तमो हनुमान् सम्पातिदर्शितमार्गेण, लङ्कामभिलक्ष्य शतयोजनायामं क्षारसागरमुत्तीर्णवान् ।

भाषाऽर्थः—उसके ( किष्किन्धा से कूच करने के ) बाद बलवान् हनुमान्‌जी ( दक्षि सागर के तट पर ) सम्पाति नामक गृद्ध के कहने से सौ योजन चौड़े क्षार समुद्र व लांघ गये ॥ ७२ ॥

**तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।**
**ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७३ ॥**

अन्वयः—तत्र, रावणपालितां, लङ्कां, पुरीं, समासाद्य, अशोकवनिकां, गतां, ध्यायन्ती सीतां, ददर्श, ( हनुमानिति शेषः ) ।

व्याख्या—तत्र = दक्षिणसागरस्य दक्षिणे तटे, रावणपालिताम् = दशमुखरक्षिताम् लङ्काम् = एतन्नामिकाम्, पुरीं = नगरीम्, समासाद्य = प्राप्य, भवने भवनेऽन्वेषयन् । अशो वनिकां = वञ्जुलवाटिकाम्, गतां = वर्त्तमानाम्, तिष्ठन्तीमिति यावद् । ध्यायन्तीं = रा चरणाम्बुजं स्मरन्तीं, सीताम् = जानकीं, ददर्श = दृष्टवान् । हनुमानिति शेषः ।

समासादि—रावणेन पालिता रावणपालिता तां रावणपालिताम् । अशोकानां वनिक शोकवनिका तामशोकवनिकाम् ।

व्याकरणम्—समासाद्य = सम् + आङ् + सद् + णिच् + ल्यप् । ददर्श = दृश् + लि
वाच्यान्तरम्—( तेन हनुमता ) सीता ददृशे ।
कोषः—'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः ।
'सीता विदेहतनया सीता लाङ्गलपद्धतिः' इति ।
'वञ्जुलोऽशोकः' इत्यमरः ।

सारार्थः—समुद्रमुलंघ्य लङ्काप्रवेशादौ लङ्कां नाम राक्षसीमेकेन मुष्टिना जित्वा, रा विडालसदृशं रूपं विधाय, गृहे गृहे सीतां मार्गमाणो नहि तां तत्रावलोक्य निर्वेदमापः हनुमानन्ते उत्साहं बर्धयित्वा, पुनरन्वेषणतत्परोऽन्तेऽशोकवनिकायां रामं ध्याय तां ददर्शेति ।

भाषाऽर्थः—वहां ( दक्षिण समुद्र के दक्षिण तट ) पर रावण जिसका पालन कर था ऐसी लङ्का नाम की पुरीमें पहुंच कर (हनूमान् जी ने) (सीता को ढूंढते २ आखिर में अशोक वाटिका में, शिंशपा ( सीसम ) वृक्ष के नीचे ) बैठी हुई ( राम का ) ध्य करती हुई सीता को देखा ॥ ७३ ॥

**निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च ।**
**समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७४ ॥**

अन्वयः—( हनूमान् ) अभिज्ञानं, निवेदयित्वा, च, प्रवृत्तिं, विनिवेद्य, च, वैदेहीं, समा श्वास्य, तोरणं, मर्दयामास ।

व्याख्या—(हनूमान् सीतायै) अभिज्ञानम् = अङ्गुलीयकरूपं परिचायकम्, निवेदयित्वा = समर्प्य, च = अपि, प्रवृत्तिं = वार्त्तां, सुग्रीवसख्यादिकाम् । विनिवेद्य = उक्त्वा, च = पुनः, वैदेहीं

जानकीम्, समाश्वास्य = सन्तोष्य, (सद्यस्ते पतिः सैन्यान्यादायागमिष्यतीत्येवं सान्त्वयित्वा) तोरणम् = अशोकवनिकाबहिर्द्वारम्, मर्दयामास = चूर्णयामास ।

व्याकरणम्—निवेदयित्वा = नि + विद् + णिच् + क्त्वा । विनिवेद्य = वि + नि + विद् = णिच् + ल्यप् । समाश्वास्य = सम् + आङ् + श्वस् + णिच् + ल्यप् । मर्दयामास = मर्द् + णिच् + लिट् ।

वाच्यान्तरम्—(तेन हनुमता) तोरणं मर्दयाञ्चक्रे ।

कोषः—'तोरणं तु बहिर्द्वारम्' इति शब्दार्णवः ।

'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्' इत्यमरः ।

'अभिज्ञानं ज्ञापकं स्यात्परिचायकमित्यपि' इति कोषः ।

सारार्थः—हनूमानशोकवनिकामध्ये सीतां व्रतादिभिः पतिविरहेण चातिकृशामालक्ष्य, प्रथमं रामकथाकथनेन तत्परीक्षामालापं च कृत्वा, पश्चाद्विश्वसितायै तस्यै रामाङ्गुलीयकं दत्वा, रामसुग्रीवयोः सख्यं, सेनासंघटनं, रामचिह्नं, सीताविरहेण रामचेष्टां च विनिवेद्य मासद्वयमध्य एव ससैन्यः समित्रो राम आगमिष्यति, वा—मत्पृष्ठमारुह्याद्यैव तं पश्य, अहमेव केवलः सरावणां लङ्कां चूर्णयितुं दक्षः, किमन्यैर्महद्भिः कपिभिरित्युक्ते जातशङ्कायाः प्रतीत्यर्थं स्वविराट्स्वरूपं च प्रदर्श्य, रावणदर्शनार्थं किञ्चिदुपद्रवकरणं निश्चित्य, अशोकवनिकाबहिर्द्वारं चूर्णीकृतवान् ।

भाषाऽर्थः—(हनूमान जी ने, सीताजी को रामजी की) निशानी (मुद्रिका) देकर, और (सुग्रीवसे मैत्री, होना तथा सेना-संघटन आदि का) हाल कहकर, और (जल्दी आवेंगे, घबड़ाना नहीं राम के बाण, के आगे रावण नहीं ठहर सकता इत्यादि बातों से) जानकी जी को आश्वासन देकर (अशोक वाटिका के बाहरी दरवाजे) तोरण (गुमज) को तोड़ डाला ॥ ७४ ॥

पञ्च सेनाऽग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।
शूरमक्षं च निष्पिष्य ग्रहणं समुपाविशत् ॥ ७५ ॥

अन्वयः—पञ्च, सेनाऽग्रगान्, सप्त, मन्त्रिसुतान्, अपि, हत्वा, च, शूरम्, अक्षं, निष्पिष्य, ग्रहणं, समुपाविशत ।

व्याख्या—(हनूमान्) पञ्च = पञ्चसंख्यकान्, सेनाऽग्रगान् = सेनापतीन्, पिङ्गलनेत्रादीन्, ससैन्यानिति शेषः । सप्त = सप्तसंख्यकान्, मन्त्रिसुतान् = अमात्यपुत्रान्, जाम्बमाल्यादीन् । अपि = समुच्चयेऽर्थे, हत्वा = निहत्य, च = अपि, शूरं = शौर्ययुक्तम्, अक्षम् = अक्षयकुमारम्, निष्पिष्य = विनाश्य, चूर्णीकृत्य । पश्चाद् । ग्रहणम् = मेघनादप्रयुक्तब्रह्मास्त्रबन्धनम्, ब्रह्मणः प्रतिष्ठारक्षणाय । समुपागमत् = प्राप्तः ।

समासादि—अग्रे गच्छन्तीत्यग्रगाः, सेनानामग्रगाः सेनाऽग्रगाः, तान् सेनाऽग्रगान् । मन्त्रिणः सुता मन्त्रिसुतास्तान् ।

व्याकरणम्—हत्वा = हन् + क्त्वा । निष्पिष्य = निस् + पिष् + ल्यप् । समुपाविशत् = सम् + उप + आङ् + विश् + लङ् ।

वाच्यान्तरम्—(तेन हनुमता) (बन्धनं) ग्रहणं समुपाविश्यत ।

कोषः—'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ।

वरूथिनी बलं सैन्यं चक्रं, चानीकमस्त्रियाम्' इत्यमरः ।

'मन्त्री धीसचिवोऽमात्यः' इत्यमरः ।

'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी' इत्यमरः ।

'शूरो वीरश्च विक्रान्तः' इत्यमरः ।

सारार्थः—हनूमान् सीतां प्राप्य, सफलसागरपारपरिश्रमः, स्वबाहुबलपरिचयदानार्थं

रावणप्रभावरूपदर्शनार्थं च प्रथममशोकवनिकायामुपद्रवं कृत्वा, तद्रक्षकान् राक्षसांश्च निहत्य, पुनरागतान् सैन्यनायकान् मन्त्रिसुतांश्च हत्वाऽन्ते मेघनादेन तुमुलं समरं विधाय तत्प्रयुक्त-ब्रह्मास्त्रबन्धनाधीनो जात इति ।

भाषाऽर्थः--हनुमानजी पांच सेनापतियों को, ( और ) सात मन्त्रिपुत्रों को भी मार कर और शूर अक्षयकुमार को चूर चूर कर, (पीछे मेघनाद से छोड़ेगये ब्रह्मास्त्र से) बन्धन को प्राप्त हुये ॥ ७५ ॥

अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ।। ७६ ।।

अन्वयः--वीरः, हनूमान्, पैतामहाद्, वराद्, अस्त्रेण, उन्मुक्तम्, आत्मानं, ज्ञात्वा, यदृच्छया, तान्, यन्त्रिणः, राक्षसान्, मर्षयन्, ( आस्ते-इति शेषः । )

व्याख्या--वीरः = अनेकराक्षससंहारकः, हनूमान् = अञ्जनीनन्दनः, सुग्रीवसचिवः । पैतामहात् = पितामहदत्ताद्, वराद् = वरदानाद्, मदस्त्रादपि निर्मुक्तिर्भविष्यतीति वरादिति भावः । अस्त्रेण = ब्रह्मास्त्रेण, उन्मुक्तं = परित्यक्तम्, आत्मानं = निजम्, ज्ञात्वा = विदित्वा, यदृच्छया = स्वेच्छया, रावणसभागमनहेतुना । तान् = प्रसिद्धान्, यन्त्रिणः = बन्धकान्, बद्ध्वा नेतॄनिति यावद् । राक्षसान् = कौणपान्, मेघनादकिङ्करानिति यावद् । मर्षयन् = तदपराधान् क्षममाणः, आस्त इति शेषः ।

व्याकरणम्--ज्ञात्वा = ज्ञा + क्त्वा । मर्षयन् = मृष् + णिच् + शतृ । अत्राऽऽस्ते-इति क्रियाऽध्याहारो बोध्यः ।

वाच्यान्तरम्--वीरेण हनुमता ( आसे ) ।

कोषः--'आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियाम्' इत्यमरः ।
'राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आसरः' इत्यमरः ।

सारार्थः--वस्तुतो ब्रह्मास्त्रेणाप्यवशीभूतः स हनूमान् मार्गे नानोपद्रवविधायकानां राक्षसानामखिलमुपद्रवं क्षममाणो रावणसभागमनधिया मौनावलम्बनमेवाङ्गीकृतवान् ।

भाषाऽर्थः--वीर हनुमान् जो ब्रह्मा जी के वरप्रदान से ब्रह्मास्त्र से छुटकारा पाये हुए अपने को जानकर ( भी ) अपनी इच्छा से रस्सोंसे बांध कर ले जाने वाले राक्षसों का अपराध सहते हुए स्थित रहे ॥ ७६ ॥

ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् ।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ।। ७७ ।।

अन्वयः--ततः, महाकपिः, मैथिलीं, सीतां, च, ऋते, लङ्कां, पुरीं, दग्ध्वा, रामाय, प्रियम्, आख्यातुम्, पुनः, आयात् ।

व्याख्या--ततः = रावणदर्शनसंवादाद्यनन्तरम्, महाकपिः = वानरर्षभः, हनुमानिति यावद् । मैथिलीं = मिथिलेशकन्यकाम्, सीताम् = एतन्नामिकाम्, अर्थात्-सीतावासस्थानम् । च = चकाराद् विभीषणगृहमपि, ऋते = विना, सर्वाम् । लङ्काम् = एतन्नामिकां, पुरीं = नगरीं, दग्ध्वा = सन्दह्य, निजपुच्छप्रज्वालितज्वालया भस्मसात्कृत्वेति यावद् । रामाय = भरताग्रजाय, सीतोपलब्धिसमुत्सुकाय । प्रियम् = सीतादर्शनरूपम्, आख्यातुं = निवेदयितुम्, पुनः = भूयः, निवृत्त्येति भावः । आयात् = आगतः ।

समासादि--महांश्चासौ कपिर्महाकपिः ।

व्याकरणम्--दग्ध्वा = दह् + क्त्वा । आख्यातुम् = आङ् + ख्या + तुमुन् । आयात् = आङ् + या + लङ् ।

वाच्यान्तरम्--महाकपिना पुनरायायत ।

सारार्थः—हनूमान् रावणसभां गत्वा रावणाज्ञया राक्षसकृतवन्हियोजनविधानवता पुच्छेन सीतास्थानं विभीषणभवनं च विहाय सकलां लङ्कां भस्मसात्कृत्वा, पुनः सीतां प्रणम्य समुद्रमुल्लङ्घ्य, उत्तरतटस्थान् प्रतीक्षकान् वानरान् सन्तोष्य, तैः सह मधुवने मधूनि पीत्वा, ततः सत्वरं सीतादर्शनवृत्तान्तनिवेदनाय किष्किन्धास्थं रामं प्रत्यागतः ।

भाषाऽर्थः--उसके बाद वानरों में श्रेष्ठ (हनुमान् जी) मिथिला देश की राजकुमारी सीता को ( सीताजी के वासस्थान और विभीषण के महल को ) छोड़, ( सारी ) लङ्कापुरी को खाक कर, राम से प्रिय ( सन्देशा ) कहने के लिये ( लौट ) आये ॥ ७७ ॥

सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७८ ॥

अन्वयः—अमेयात्मा, सः, महात्मानं, रामम्, अभिगम्य, प्रदक्षिणम्, कृत्वा, तत्त्वतः, सीता, दृष्टा, इति, न्यवेदयत् ।

व्याख्या—अमेयात्मा = अप्रमेयबलबुद्धिधैर्यादिमान्, सः = हनुमान्, महात्मानं = परमधैर्यवन्तम्, परमात्मानम् । रामम् = एतन्नामकम्, अभिगम्य = आभिमुख्येन प्राप्य, प्रदक्षिणम् = परिक्रमणं, कृत्वा = विधाय, तत्त्वतः = वस्तुतः, सीता = जानकी, भवत्प्राणप्रियेति भावः । दृष्टा = अवलोकिता, संभाषिता चेति शेषः । इति = एतद्, रामाय । न्यवेदयत् = कथयामास,-रावणपुर्यां तव विरहेणान्नपानमपि विहाय भवद्दर्शनसंभावनया कथं कथमपि प्राणान् धारयति, मासद्वयोर्ध्वं निराशा भूत्वा, न सा जीवनं धारयिष्यतीति ।

समासादि--महानात्मा यस्यासौ महात्मा, तं महात्मानम् । अमेयः ( अपरिच्छेद्यः ) आत्मा यस्य सोऽमेयात्मा ।

व्याकरणम्--अभिगम्य = अभि + गम् + ल्यप् । कृत्वा = कृ + क्त्वा । न्यवेदयत् = नि + विद् + णिच् + लङ् ।

वाच्यान्तरम्--अमेयात्मना तेन न्यवेद्यत ।

कोषः--'तत्त्वतो वस्तुतो ध्रुवम्' इति कोषः ।

सारार्थः--हनुमान् रामस्य समीपं गत्वा प्रदक्षिणां प्रणामं च कृत्वा, यथा सीताऽवलोकिता, तथा सर्वं सत्यं सत्यं तस्मै कथयामास ।

भाषाऽर्थः--अमित बलबुद्धिशाली उन हनुमान् जी ने परम धैर्यशाली रामजी के संमुख जाकर प्रदक्षिणा ( और ) प्रणाम कर, ( उनसे ) वस्तुतः सीता ( मैंने ) देखी, यह निवेदन किया ॥ ७८ ॥

इति सुन्दरकाण्डकथाबीजम् ।

---

# अथ युद्धकाण्डकथाऽऽरभ्यते ।

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७९ ॥

अन्वयः--ततः, सुग्रीवसहितः, ( रामः ) महोदधेः, तीरं, गत्वा, आदित्यसंनिभैः, शरैः, समुद्रं, क्षोभयामास ।

व्याख्या--ततः = हनुमद्वचनात् सीतावृत्तान्तज्ञानानन्तरं, ( सर्वान् वानरान् भल्लूकांश्चैकीकृत्य ) सुग्रीवसहितः = वालिलघुसोदर्ययुक्तः, सुग्रीवो वानराणां राजा, तेन संयुतः सन् । (रामः) महोदधेः = बृहज्जलनिधेः, शतयोजनविस्तरस्य समुद्रस्य । तीरं = तटं, गत्वा = उपगम्य, ( सागरं दुष्पारमवगम्य, सागरस्यानुकूलकरणाय त्रिरात्रं तत्तटे कुशासने चोप-

विशयोपवासो रामेण कृतः, तथाऽपि समुद्रस्यानुकूल्यं न किमपि दृष्ट्वा संजातामर्षः सन् ) आदित्यसन्निभैः = सूर्यसदृशैः, शरैः = बाणैः, अतितीक्ष्णैरित्यर्थः । समुद्रम् = क्षारसागरम्, क्षोभयामास = आपातालमाकुलीचकार ।

समासादि--सुग्रीवेण सहितः, सुग्रीवसहितः । महांश्चासावुदधिर्महोदधिः । अदितेरपत्यं पुमानादित्यः सूर्यः, तेनादित्येन सन्निभाः सदृशा ये त आदित्यसन्निभाः, तैरादित्यसन्निभैः ।

व्याकरणम्--गत्वा = गम् + क्त्वा । क्षोभयामास = क्षुभ् + णिच् + लिट् ।

वाच्यान्तरम्--सुग्रीवसहितेन ( रामेण ) समुद्रः क्षोभयाञ्चक्रे ।

कोषः--'महोदधिरपां नाथोऽम्भोधिः पाथोधिवारिधी' इति कोषः ।

सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः ।

साराऽर्थः--ससैन्येन सुग्रीवेण सह रामो दक्षिणसमुद्रस्योत्तरतटमुपगम्य 'कथं सैन्यं तरिष्यति दुस्तरं सागरम्' इति चिन्तितः, समुद्रस्य प्रसादं विना नैतद् भविष्यतीति तत्तटे त्रिरात्रमुपवासनिरतः सन् स्थितोऽपि समुद्रस्य किमपि प्रसन्नतासूचकं लक्ष्म नानुभूय, पश्चात्स्वापमानजनितामर्षज्वलितोऽसौ सूर्यदीप्तितुल्यैः शरैः समुद्रमापातालं व्याकुलीकृतवानिति।

भाषाऽर्थः--उसके बाद सुग्रीव के साथ ( राम जी ने ) दक्षिण समुद्र के ( उत्तर ) किनारे पर पहुंच कर, सूर्य के समान चमकीले बाणों से, समुद्र को पाताल तक व्याकुल कर दिया ॥ ७९ ॥

**दर्शयामास चात्मानं समुद्रः सरितां पतिः ।**
**समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ८० ॥**

अन्वयः--सरितां, पतिः, समुद्रः, आत्मानं, दर्शनामास, च, समुद्रवचनाद्, च, एव, नलं, सेतुम्, अकारयत् ।

व्याख्या--सरितां = नदीनां, पतिः = अधिपः, समुद्रः = सागरः, अर्थात्-सपत्नीकः समुद्रः पुरुषरूपेणेति भावः। ( रामाय ) आत्मानम् = स्वस्वरूपम्, दर्शयामास = प्रदर्शितवान्, अपराधक्षमापनहेतवे शङ्कितः समुद्र उपस्थित इति । च = चकारात्स्वापराधक्षमापनवचनं समुच्चारयामास, (ततः प्रसन्नो रामः) समुद्रवचनात् = सागरोपदेशाद्, च = चकारात्स्वाश्रितकल्याणाय, एव = निश्चयेन, नलम् = एतन्नामकवानरम्, सेतुं = जलोपरि स्थलरूपमार्गम्, अकारयत् = कारितवान्, समुद्रप्रार्थनया नलेन सेतुं रचयामासेति ।

व्याकरणम्--दर्शयामास = दृश् + णिच् + लिट् + अकारयत् = कृ + णिच् + लङ् ।

वाच्यान्तरम्--समुद्रेणात्मा दर्शयाञ्चक्रे ( रामेण ) नलं सेतुरकार्यत ।

कोषः--'अथ नदी सरिद्' इत्यमरः ।

'स्यात्सेतुर्जलमार्गोऽस्त्री' इति कोषः ।

सारार्थः--कोपज्वलितं राममवगम्य, सस्त्रीकः सागरः प्रत्यक्षरूपेण रामस्यान्तिकमागत्य स्वकृतापराधं क्षमापयन्, पश्चादनेनानेन शीघ्रतया सेतुर्भविष्यतीति वदन्, नल एषगोलाङ्गूलो वानरो विश्वकर्मणः पुत्रोऽस्ति, मतङ्गमुनेः शापाज्जलेऽनेन विक्षिप्तं वस्तु निःसारवस्तुवज्जलोपरि तिष्ठतीति चोक्त्वा, पुनर्जले प्रविष्टस्ततो नलद्वारा सैन्योत्तारणाय रामः सेतुं रचयामास ।

भाषाऽर्थः--और (डरे हुए) नदियों के पति समुद्रने (राम जी को) अपना स्वरूप दिखलाया तब उन्हीं के कहने ही से (रामजी ने) नल के द्वारा (समुद्र में) बांध बंधवाया ॥८०॥

**तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।**
**रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८१ ॥**

अन्वयः--तेन, लङ्कां, पुरीं, गत्वा, रामः, आहवे, रावणं, हत्वा, सीताम्, अनुप्राप्य, परां, व्रीडाम्, उपागमत् ।

व्याख्या-तेन = सेतुना, लङ्कां = तदाख्यां, पुरीं = नगरीं, रावणराजधानीमिति यावद् । गत्वा = प्राप्य, रावणापमानितेन विभीषणेन मिलितः । रामः = भरताग्रजः, आहवे = संग्रामे, रावणं = लङ्काऽधिपतिं, सपुत्रामात्यबान्धवमिति योज्यम् । हत्वा = मारयित्वा, सीतां = जानकीम्, अनुप्राप्य = संगम्य, पराम् = परमाम्, व्रीडाम् = लज्जाम्, उपागमत् = प्राप्तः, अर्थात्-कामिनो दशाननस्य भवने वर्त्तमानायाः सीताया अङ्गीकारे लोकापवादशङ्कया लज्जापरवशो जातः ।

व्याकरणम्—गत्वा = गम् + क्त्वा । हत्वा = हन् + क्त्वा । अनुप्राप्य = अनु + प्र + आप् + ल्यप् । उपागतः = उप + आङ् + गम् + कर्तरि क्तः ।

वाच्यान्तरम्—रामेण परा व्रीडोपागम्यत ।

कोषः—'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः' इत्यमरः ।

सारार्थः—निर्मितसेतुना रामो लङ्कां गत्वा रणे दशाननं निहत्य, सीतां प्राप्य, चिरात् परगृहे वर्त्तमानाऽपि सीताऽविचार्य गृहीतेति लोकलज्जावशीभूतो जातः ।

भाषाऽर्थः—उस ( बांध ) से लङ्का पुरी जाकर रामजी लड़ाई में रावण को मार, पीछे सीता को पाकर ( पराये के घर में बहुत दिन तक रही हुई स्त्री को भी विना विचारे रख लिया, इस लोकापवाद की शङ्का से ) अत्यन्त लज्जित हुए ॥ ८१ ॥

**तामुवाच ततो रामः परुषं जनसंसदि ।**
**अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ॥ ८२ ॥**

अन्वयः—ततः, रामः, जनसंसदि, तां, परुषम्, उवाच, सा, सती, सीता, अमृष्यमाणा, ज्वलनं, विवेश ।

व्याख्या—ततः = लज्जोत्पादानन्तरं, लज्जादूरीकरणाय । रामः = भरताग्रजः, जनसंसदि = वानरसभायाम्, तां = सीताम्, परुषम् = कठोरम्, (मर्मकृन्तनं यथा स्यात्तथा) उवाच = अवदद्, यद्यपि जनसमक्षे यदुक्तं तल्लोकज्ञापनाय, स्वयं तु रामः सीताया अकथनीयं सतीत्वं जानात्येवेति, तथाऽपि एतावद्दिनमेतस्य कामातुरस्य गृहे वसन्त्याः कथं सतीत्वरक्षणं तत्र निष्पन्नमिति हेतोः स्वीयपातिव्रत्यस्य परीक्षा जनानां पुरत एव दर्शनीयेति रामेणादिष्टा । सा = प्रसिद्धा, लज्जादुःखाभ्यामतिनताङ्गी । सती = पतिव्रता, सीता = जानकी, अमृष्यमाणा = असहमाना, ज्वलनम् = अग्निम्, विवेश = प्रविष्टेति ।

समासादि—जनानां वानराणां संसद् सभेति जनसंसद्, तस्यां जनसंसदि ।

व्याकरणम्—उवाच = ब्रू + लिट् । अमृष्यमाणा = मृष् + शानच् + टाप्, मृष्यमाणा—ततो नञ्समासः । विवेश = विश् + लिट् ।

वाच्यान्तरम्—रामेण सा ऊचे, अमृष्यमाणया सीतया ज्वलनो विविशे ।

कोषः—'कठोरं कर्कशं तीक्ष्णं परुषम्' इति शब्दार्णवः ।
'कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपाद्' इत्यमरः ।
'पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता' इत्यमरः ।

सारार्थः—वानरादीनां समक्षे सीतायाः शङ्कानाशाय परीक्षा भवितुमतियुक्तेति लोकरीतिपरमचतुरो रामस्तां सतीत्वरक्षणप्रत्ययोपायकरणमादिशत्, सीताऽपि बहिस्तत्कथया खेदं प्रकटयन्ती सत्वरमेव प्रज्वलन्त्यां रचितचितायां प्रविष्टा, ततो जीवन्तीं पूर्वतोऽपि समधिकशोभाशालिनीं सीतां विलोक्य चकितचित्ताः सर्वे तस्याः प्रशंसां चक्रुः ।

भाषाऽर्थः—उसके बाद रामजी वानरों की सभा में ( सब लोगों के सामने ही ) उन सीता जी से कठोर बात बोले ( तब ) वह प्रसिद्ध प्रतिव्रता जानकी जी ( उस वचन को ) न सहती हुई ( झट ) अग्नि में ( परीक्षाऽर्थ ) बैठ गई ॥ ८२ ॥

ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ।
कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ८३ ॥
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ।
बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः ॥ ८४ ॥

अन्वयः—ततः, अग्निवचनात्, सीतां, विगतकल्मषां, ज्ञात्वा, महात्मनः, राघवस्य, महता, तेन, कर्मणा, सदेवर्षिगणं, सचराचरं, त्रैलोक्यं, तुष्टम्, ( ततः ) सर्वदैवतैः, पूजितः, सम्प्रहृष्टः, रामः, बभौ ।

व्याख्या—ततः = अग्निप्रवेशानन्तरम्, अग्निवचनाद् = वह्निवाक्याद्, "विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव !" इत्येवं रूपात् । सीताम् = रावणगृहवर्त्तमानां जानकीं, विगतकल्मषां = पापसम्बन्धशून्याम्, ज्ञात्वा = जनान् विज्ञाप्य, स्वीचकारेति शेषः । महात्मनः = सर्वश्रेष्ठस्य, महाशयस्य । राघवस्य = रामस्य, महता = अतिविस्मयकारिणा, वा-परमप्रशंसनीयेन, तेन = सीतावह्निप्रवेशरूपेण, कर्मणा = विधानेन, सदेवर्षिगणम् = देवर्षिवृन्दसमन्वितं, सचराचरम् = सजङ्गमस्थावरं, त्रैलोक्यम् = भूर्भुवःस्वरात्मकं, तुष्टम् = सन्तुष्टं, जातम् । ततः । सर्वदैवतैः = सकलदेवैः, पूजितः = संमानितः, (अत एव) संप्रहृष्टः = सम्यग् हृष्टान्तःकरणः, रामः = भरताग्रजः, अनुपमसतीपतिः । बभौ = शुशुभे ।

समासादि—अग्नेर्वचनमग्निवचनं, तस्मादग्निवचनात् । विगतं (दूरीभूतं) कल्मषं लोकशङ्काऽपवादरूपं यस्याः सा विगतकल्मषा, तां विगतकल्मषाम् । सर्वाणि च तानि दैवतानि सर्वदैवतानि तैः सर्वदैवतैः । त्रयाणां लोकानां समाहारस्त्रिलोकी, त्रिलोकी एव त्रैलोक्यम् । चराश्चाचराश्च चराचराः, तैश्चराचरैः सह वर्त्तत इति सचराचरम् । देवाश्च ऋषयश्च देवर्षयः, देवर्षीणां गणा इति देवर्षिगणास्तैर्देवर्षिगणैः सह वर्त्तत इति सदेवर्षिगणम् । महानात्मा यस्य स महात्मा तस्य ।

व्याकरणम्—ज्ञात्वा = ज्ञा + क्त्वा । तुष्टमित्यस्याग्रे बभूवेति क्रियाऽध्याहारो बोध्यः । बभौ = भा + लिट् ।

वाच्यान्तरम्—सदेवर्षिगणेन सचराचरेण त्रैलोक्येन तुष्टेन बभूवे, पूजितेन सम्प्रहृष्टेन रामेण बभे ।

कोषः—'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः' इत्यमरः ।
'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषम्' इत्यमरः ।
'पूजितो महितो मान्यः' इति कोषः ।

सारार्थः—सीतायाः परीक्षाऽनन्तरमग्निवाक्यात् सर्वेभ्यो वानरादिभ्यो जानक्या अक्षुण्णं पातिव्रत्यं विज्ञाप्य त्रैलोक्यं चकितं विधाय, देवैः पूजितो रामो लङ्कातटे शुशुभे ।

भाषाऽर्थः—तब अग्नि के कहने से सीता को निष्पाप ( शुद्ध ) समझ कर, महात्मा रघुवंशी रामजी के परम प्रशंसनीय उस ( सीता के अग्निप्रवेश रूप ) महान् कार्य से देवता और ऋषि गणों के सहित, तथा-चर-अचर-के सहित (भूर्भुवःस्वः) तीनों लोक प्रसन्न हुआ, उसके बाद सब देवताओं से पूजा को प्राप्त किये हुये अत एव परम प्रसन्न हुये रामजी सुशोभित होने लगे ॥ ८३ ॥ ८४ ॥

अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८५ ॥

अन्वयः—लङ्कायां, राक्षसेन्द्रं, विभीषणं, च, अभिषिच्य, तदा, कृतकृत्यः, विज्वरः, रामः, प्रमुमोद, ह ।

व्याख्या—लङ्कायां = तदाख्यायां पुर्यां, रावणराजसिंहासन इति भावः । राक्षसेन्द्रं=

राक्षसमुख्यम्, विभीषणम् = एतन्नामकम्, रावणकनिष्ठभ्रातरम् । च = एव, अभिषिच्य = राज्याभिषेकं कृत्वा, तदा = अभिषेकनिवृत्त्यनन्तरम्, कृतकृत्यः = कृतोपकारप्रतीकारः, विज्वरः = विगतचिन्ताज्वरः, रामः = भरताग्रजः, अभिलाषस्य पूर्णत्वात् । प्रमुमोद = प्रकर्षेण मोदं प्राप, ह = हर्षाधिक्ये ।

समासादि—राक्षसेष्विन्द्रो राक्षसेन्द्रस्तं राक्षसेन्द्रम् विभीषयतीति विभीषणस्तं विभीषणम् । विगतो ज्वरो यस्य स विज्वरः ।

व्याकरणम्—अभिषिच्य = अभि + षिच् + ल्यप् । प्रमुमोद = प्र + मुद् + लिट् ।

वाच्यान्तरम्—कृतकृत्येन विज्वरेण रामेण प्रमुमुदे ।

कोषः—'निश्चिन्तो विज्वरः सौम्य उत्कण्ठारहितस्तथा' इति शब्दार्णवः ।

सारार्थः—रावणराज्येश्वरं विभीषणं विधाय, निर्दोषां सीतां चादाय सकलाभीष्टसिद्ध्या सर्वथा प्रसन्नो रामो लङ्कातो निवृत्त्यर्थमुद्यत इति ।

भाषाऽर्थः—लङ्का में (रावण की राजगद्दी पर ) राक्षसों में इन्द्र विभीषण का निश्चित रूप से राज्याभिषेक कर (तिलक देकर) उस समय कृतकृत्य अत एव सभी प्रकार से निश्चिन्त हुये रामजी बड़े हर्ष को प्राप्त हुए ॥ ८५ ॥

देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८६ ॥

अन्वयः—देवताभ्यः, वरं, प्राप्य, वानरान्, समुत्थाप्य, सुहृद्वृतः, रामः, पुष्पकेण, अयोध्यां, प्रस्थितः ।

व्याख्या—देवताभ्यः = इन्द्रादिदेवेभ्यः, ( तदानीं रावणवधजनितहर्षवशात्स्वदिदृक्षया समागतेभ्य इति योज्यम् ) वरम् = आशीर्वादम्, 'सुप्तोत्थितवदुत्तिष्ठन्तु वानरा' इत्येवं रूपमिति भावः । प्राप्य = लब्ध्वा, अत एव । वानरान् = कपीन्, ऋक्षांश्चेति शेषः । समुत्थाप्य = रणे मृतानपि देवदत्तवरेण यथावत्सुप्तोत्थितादिविशिष्टान् संबोध्येत्यर्थः । ( अथ सर्वे स्वस्वदेशं गच्छत ! 'युष्माकं प्रसादात् दुर्जनो रावणो रिपुर्हतः, एवमपि संबोध्य ) सुहृद्वृतः = सुहृद्भिः कतिपयैः सुग्रीवविभीषणहनुमदङ्गदादिभिः, वृतः = परिवेष्टितः, सन् । रामः = भरताग्रजः, पुष्पकेण = तदाख्येन विभीषणसमर्पितकुबेरव्योमयानेन, अयोध्याम् = अयोध्याऽभिमुखं, प्रस्थितः = चलितः, इति ।

समासादि—सुहृद्भिर्वृतः सुहृद्वृतः ।

व्याकरणम्—प्राप्य = प्र + आप् + ल्यप् । समुत्थाप्य = सम् + उद् + ष्ठा + णिच् + ल्यप् ।

वाच्यान्तरम्—अयोध्या रामेण प्रस्थिता ।

कोषः—'व्योमयानं तु पुष्पकम्' इति शब्दार्णवः ।
'विमानं तु पुष्पकम्' इति चामरः ।
'अथ मित्रं सखा सुहृद्' इत्यमरः ।

सारार्थः—रावणनिधनानन्तरं परममुदिता देवा रामसत्कारार्थमागताः, तेभ्यो मृतवानरसंजीवनाय वरं संप्रार्थ्य, तेनैव तान् जीवयित्वा, तेभ्यो गमनायानुज्ञां दत्वा, स्वराजधानीगमनाय विभीषणसमर्पितकुबेरव्योमयानमादाय मित्रवर्गेण सहितो रामोऽयोध्यां प्रति यात्रां कृतवान् ।

भाषाऽर्थः—( आये हुए ) देवताओं से, ( मरे हुए वानरों के जीने के लिये ) वर प्राप्त कर वानरों को जिला कर, ( बाद कुछ ) इष्ट मित्रों के साथ, रामजी पुष्पक नामक हवाई जहाज से अयोध्या के तरफ रवाना हुए ॥ ८६ ॥

भरद्वाजाश्रमं गत्वाऽऽरामः सत्यपराक्रमः ।
भरतस्यान्तिके रामो हनूमन्तं व्यसर्जयत् ॥ ८७ ॥

अन्वयः--सत्यपराक्रमः, आरामः, रामः, भरद्वाजाश्रमं, गत्वा, भरतस्य, अन्तिके, हनूमन्तं, व्यसर्जयत् ।

व्याख्या--स(१)त्यपराक्रमः = अव्यर्थपौरुषः, आरामः = सर्वलोकाभिरामदाता, रामः = एतन्नामकः, भरताग्रजः । भरद्वाजाश्रमं = भरद्वाजमुनेराश्रमं, गत्वा = उपगम्य, लङ्कातः प्रस्थितः प्रयाग एव पुष्पकादवतीर्णः, इति भावः । तत्र भरद्वाजेन 'एकं दिनमत्र स्थातव्यम्' इति प्रार्थितः, तद्दिवस एव चतुर्दशवर्षपूर्त्तेः "चतुर्दशवर्षादेकदिनमपि चेदधिकं भविष्यति तदाऽहं वह्नौ प्रवेक्ष्यामि" इति भरतवाक्यस्मरणात् तत्क्षण एव । भरतस्य = कैकेयीपुत्रस्य, नन्दिग्रामस्थस्येति शेषः । अन्तिके = समीपे, हनूमन्तं = अञ्जनानन्दनं, व्यसर्जयत् = विसर्जितवान् , 'त्वमग्रे गत्वा भरताय मम प्रत्यागमनं निवेदय' इति कुशलकथनाय वेगवन्तं तं प्रेरितवानिति भावः ।

समासादि--भरद्वाजस्याश्रमो भरद्वाजाश्रमस्तं भरद्वाजाश्रमम् । सत्यः = अव्यर्थः, पराक्रमो यस्य स सत्यपराक्रमः ।

व्याकरणम्--गत्वा = गम् + क्त्वा । व्यसर्जयत् = वि + सृज् + णिच् + लङ् ।

वाच्यान्तरम्--रामेण हनूमान् व्यसर्ज्यत ।

कोषः--'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः ।

सारार्थः--रामः पुष्पकमारुह्य प्रयागे भरद्वाजमुनेर्दर्शनार्थं तदाश्रममुत्तीर्णः, परन्तु रावणं हत्वा प्रतिनिवृत्तं रामं प्रति स्नेहेन दिनमेकमत्र स्वस्थो भवेति तेन निवेदिते, प्रतिज्ञातसमयाधिक्याद् व्याकुलस्य भरतस्याश्वासनार्थं तत्सकाशे हनूमन्तं प्रेषितवान् ।

भाषाऽर्थः--जिनका पुरुषार्थ कभी व्यर्थ नहीं होने वाला है, ऐसे सब लोगों को आराम पहुंचाने वाले राम जी ने (हवाई जहाज से) भरद्वाज मुनि के आश्रम में उतर कर (और उनके कहने से एक दिन ठहर जाने से विलम्ब होने के सबब, अपने लौट आने की खबर देने के लिए ) भरतजी के समीप हनूमानूजी को भेजा ॥ ८७ ॥

पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ।
पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ।। ८८ ।।

अन्वयः--तदा, सुग्रीवसहितः, ( रामः ) तत्, पुष्पकं, पुनः, समारुह्य, आख्यायिकां जल्पन् , तदा, नन्दिग्रामं, ययौ ।

व्याख्या-तदा = भरद्वाजाश्रमान्निर्गमनसमये, सुग्रीवसहितः = सुग्रीवप्रभृतिमित्रवर्गवेष्टितः, (रामः) तत् = प्रसिद्धं, व्योमयानम् । पुष्पकं = तन्नामकम् , पुनः = भूयः, समारुह्य = आरोहणं कृत्वा, आख्यायिकाम् = भरतवृत्तप्रबन्धम् , भरतप्रशंसामित्यर्थः । जल्पन् = कथयन्, सुग्रीवायेति शेषः । तदा = तस्मिन्नेव दिने, नन्दिग्रामम् = तात्कालिकभरतवसतिम् , ययौ = जगामः ।

समासादि--सुग्रीवेण सहितः, सुग्रीवसहितः ।

व्याकरणम्--जल्पन् = जल्प् + शतृ । समारुह्य = सम् + आङ् + रुह् + ल्यप् । ययौ = या + लिट् ।

---

(१) किञ्च--सत्याऽयोध्या साऽस्त्याधारत्वेन येषान्ते सत्या अयोध्यावासिनः, तान् नित्यं पिपर्तीति सत्यपरः, अत एव न क्रमतेऽयोध्यां परित्यज्य न क्वचिद् गच्छतीत्यक्रमः स एव स इति कर्मधारयः । अयोध्यायां नित्यं स्थित एव सर्वलोकाभिरामदातेत्यनेन परिच्छिन्नमूर्त्तेरपरिच्छिन्नत्वमपि व्यक्तम् । तेनाघटितघटनाघटीयश्शक्तिमत्त्वं रघुनाथस्य व्यञ्जितम् । रघुनाथमूर्त्तेः परिच्छिन्नापरिच्छिन्नत्वे प्रमाणम्--

'य एव विग्रहो व्यातः परिच्छिन्नः स एव हि ।
अयोध्यायां निवसते ततः पादं न गच्छति ।' इति सदाशिवसंहितावचनम् ।

वाच्यान्तरम्--आख्यायिकां जल्पता सुग्रीवसहितेन रामेण नन्दिग्रामो ययेः ।

कोषः--'आख्यायिकोपलब्धार्था' इत्यमरः ।

सारार्थः--पुनर्भरद्वाजाश्रमात् पुनः पुष्पकमारुह्य सुग्रीवेण सह पूर्वानुभूतालापं कुर्वन् रामो-नन्दिग्राममुपागतः ।

भाषाऽर्थः--तब ( भरद्वाज ऋषि के आश्रम से बिदा हो ) सुग्रीव (आदि) के सहित रामजी उसी पुष्पक नामक हवाई जहाज पर फिर सवार होकर, ( सुग्रीव आदिकों से ) गुजरी हुई भरतप्रशंसासम्बन्धी बातें करते हुए, उसी दिन ( भरत के निवास-स्थान ) नन्दिग्राम पहुँचे ॥ ८८ ॥

नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः ।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८९ ॥

अन्वयः--अनघः, रामः, भ्रातृभिः, सहितः, नन्दिग्रामे, जटां, हित्वा, सीताम्, अनुप्राप्य, पुनः, राज्यम्, अवाप्तवान् ।

व्याख्या-अनघः=पापरहितः, पालितपितृप्रतिज्ञ इत्यर्थः । यद्वा--निरस्तसमस्तव्यसनः । रामः=कौशल्यातनयः, भ्रातृभिः=भरतलक्ष्मणशत्रुघ्नैः, सहितः=सम्मिलितः, समन्वितः । नन्दिग्रामे=भरतनिवासस्थाने, जटां=शिरःकेशजूटरूपां, हित्वा=संशोध्य, सीतां=वैदेहीम्, अनुप्राप्य=समीपे लब्ध्वा, दिव्यसिंहासने सीतयाऽभिषेकम्प्राप्येत्यर्थः । राज्यम्=राजभावं, पित्राज्ञया विसृष्टम् । पुनः=भूयः, अवाप्तवान्=प्राप्तवान् ।

व्याकरणम्--हित्वा=ओहाक्+क्त्वा । अनुप्राप्य+अनु+प्र+आप्+ल्यप् । आप्तवान्=आप्+क्तवतुः ।

वाच्यान्तरम्--रामेण राज्यं पुनराप्तम् ।

सारार्थः--सर्वैर्मित्रगणैः संयुतो रामो भरतादिभिर्मिलित्वा, मुनिवेषं विहाय राजार्हं रूपं विधाय, सीतां च समीपमुपवेश्य, ततो राज्यं गृहीतवान् ।

भाषाऽर्थः--अच्छी तरह से पिता की प्रतिज्ञा पालन करने से निष्पाप रामजी भाइयों ( भरत-लक्ष्मण-शत्रुघ्न ) के सहित नन्दिग्राम में जटा साफ करके (मुनिवेष को हटा कर) सीता को समीप में पाकर पुनः राज्य को प्राप्त किया ॥ ८९ ॥

इति लङ्काकाण्डकथाबीजम् ।

# अथोत्तरकाण्डकथाऽऽरम्भः ।

प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ९० ॥
न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषाः क्व चित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ९१ ॥

अन्वयः--लोकः, प्रहृष्टमुदितः, तुष्टः, पुष्टः, सुधार्मिकः, निरामयः, अरोगः, दुर्भिक्षभयवर्जितः, च, (आसीत्) के चित्, पुरुषाः, क्व चित्, पुत्रमरणं, न, द्रक्ष्यन्ति, नार्यः, च, अविधवाः, नित्यं, पतिव्रताः, भविष्यन्ति ।

व्याख्या--(रामे राज्यं शासति सति) लोकः=रामानुशासनकालिकप्रजागणः, प्रहृष्टः=रोमाञ्चवत्तां प्राप्तः, मुदितश्च=तत्कारणीभूतसर्वाभिलषितप्राप्तिजनितप्रमोदविशिष्टः, स एव स इति कर्मधारयः । अत एव । ( च ) तुष्टः=बहुप्रदाद्भगवतः सांसारिकपारमार्थिकलाभात्स-

न्तुष्टः, अत एव । पुष्टः = दारिद्र्यकार्श्यरहितः, अत एव । सुधार्मिकः = परमधर्मशीलः, अत एव । निरामयः = मानसव्यथारहितः, अरोगः = देहजव्याधिहीनः, दुर्भिक्षभयवर्जितः = दुर्भिक्षहेतुकभीतिरहितः, सदा सुभिक्षशालीति यावद् । च = चौरभयवर्जितः, ( तदानीमासीत् ) ।

अथ च-के चित् = केऽपि, पुरुषाः = जनाः, क्व चित = कुत्रापि प्रदेशे, स्वप्नादावपि । पुत्रमरणं = सुतनिधनम्, पुत्रशोकमिति भावः । न द्रक्ष्यन्ति = न ह्यवलोकिष्यन्ते, पितरि जीवति न पुत्रमरणम् भविष्यतीति भावः । तथा च-नार्यः = स्त्रियः, अविधवाः = वैधव्यरहिताः, सौभाग्यवत्य एव । तथा-नित्यं = सर्वदा, पतिव्रताः = सतीत्वयुक्ताः, स्वस्वपत्यनुकूलवर्त्तिन्यः । भविष्यन्ति = वर्त्तिष्यन्ते, अत्र दशरथमरणेनापि कौशल्याऽऽदयो राममातरः, योग्यपुत्रवत्तया वृद्धतया च न विधवा इति ज्ञेयम्, धन्योऽसौ समयो यस्मिन्नीदृशी व्यवस्थाऽऽसीत् ।

समासादि—प्रकर्षेण हृष्टः प्रहृष्टः, प्रहृष्टश्चासौ मुदितश्च प्रहृष्टमुदितः । निर्गत आमयो यस्मात् स निरामयः । न रोगो यस्य सोऽरोगः । भिक्षाणां व्यृद्धिर्दुर्भिक्षम्, दुर्भिक्षादन्नाभावाद् भयं दुर्भिक्षभयं, तेन बर्जित इति दुर्भिक्षभयबर्जितः । न विधवा अविधवाः ।

व्याकरणम्—प्रहृष्टः = प्र + हृष् + क्तः । मुदितः + मुद् + क्तः । तुष्टः = तुष् + क्तः । पुष्ट = पुष् + क्तः । द्रक्ष्यन्ति = दृश् + लृट् । भविष्यन्ति = भू + लृट् ।

वाच्यान्तरम्-लोकेनाभूयत, कैश्चित्पुरुषैः पुत्रमरणं न द्रक्ष्यते, अविधवाभिर्नारीभिर्भविष्यते।

कोषः—'हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः' इत्यमरः ।
'लोकस्तु भुवने जने' इत्यमरः ।
'दुर्भिक्षमन्नाल्पत्वं च' इति कोषः ।
'सती साध्वी पतिव्रता' इत्यमरः ।

सारार्थः—रामेऽयोध्यायां राज्यं प्रशासति, तदानीं सर्वे जनाः हृष्टाः पुष्टा धार्मिका आधिव्याधिबर्जिता आसन्, दुर्भिक्षस्य चर्चाऽपि न कुत्रापि, तथा जीवति पितरि पुत्रो यमसदनं न गमिष्यति, सर्वाः स्त्रियः सौभाग्यवत्यः पतिव्रताश्च भविष्यन्तीति ।

भाषाऽर्थः—(जब रामजी राज्य कर रहे थे उस समय ) उनके प्रजागण हृष्ट, पुष्ट, सन्तुष्ट, धर्मात्मा, मानसिक तथा शारीरिक पीड़ा से रहित दुर्भिक्ष ( अकाल ) के भय से शून्य रहते थे, और कोई भी पुरुष कभी पुत्र के मरण को नहीं देखेगा, और स्त्रियां विधवा नहीं होगीं तथा पतिव्रता होगीं ॥ ९० ॥ ॥ ९१ ॥

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥ ९२ ॥
न चापिक्षुद्भयं तत्र न तस्करभयं तथा ।
नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९३ ॥
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ।

अन्वयः—तत्र, अग्निजं, भयं, न, किंचिद्, च, जन्तवः, अप्सु, न, मज्जन्ति, किंचिद् वातजं, भयं, न, तथा, ज्वरकृतम्, अपि ( किंचिद्, भयं ) न, क्षुद्भयं, च, अपि, न, तथा, तस्करभयं, न, (भविष्यति), नगराणि, राष्ट्राणि, च, धनधान्ययुतानि, च, ( भविष्यन्ति ) सर्वे, यथा, कृतयुगे, तथा, नित्यं, प्रमुदिताः, ( भविष्यन्ति ) ।

व्याख्या—तत्र = रामराज्ये, अग्निजं = वह्निहेतुकं, भयं = भीतिः, न = नहि, किंचिन्न = अल्पमपि, भविष्यतीत्यर्थः । जन्तवः = प्राणिमात्राः, प्रजाजना इति भावः । अप्सु = जलेषु, सरोवरतटाकादावित्यर्थः । न मज्जन्ति = मङ्क्त्वा न मरिष्यन्तीत्यर्थः । इदमुपलक्षणम् । अकालमृत्युं न प्राप्स्यन्तीत्यर्थः । किंचित = स्वल्पमपि, वातजं = वायुहेतुकं, भयम् = भीतिः, न = नहि, प्रकम्पनझञ्झावातादिना भवनप्रासादपतनेनापि नहि केषांचिन्मरणम् । भवि-

ष्यतीत्यर्थः । वा-वायुजं = शरीरे कुब्जत्वादिकम्, वा उदरपीडाऽऽदिकम् । भविष्यति केषां चिदपि । तथा।। ज्वरकृतं = ज्वरतापादिजम्, अपि = च, ( किंचिद् भयम् ) न = नहि, भविष्यतीति शेषः । तथा । क्षुद्भयम् = क्षुधाजनितं भयं, चापि न, तथा—तस्करभयं = चौरभयं, न = नहि, भविष्यतीत्यर्थः। एवं च । नगराणि = पुराणि, राष्ट्राणि = ग्रामादीनि, च = समुच्चयार्थं, धनधान्ययुतानि = सर्वसमृद्धिमन्ति, च = एव, भविष्यन्तीत्यर्थः । न कुत्रापि धनधान्यवैकल्यम् भविष्यति । अत एव सर्वे = सकलाः, जनाः = नागरिका जानपदाश्च, यथा = येन प्रकारेण, कृतयुगे = सत्ययुगे, तथा = तेन प्रकारेण, ( अत्र त्रेतायामपि ) नित्यं = निरन्तरम्, प्रमुदिताः = हर्षिताः । भविष्यन्तीत्यर्थः ।

समासादि—अग्नेर्जातमग्निजम् । वाताज्जनितं वातजम् । ज्वरेण कृतं ज्वरकृतम् । क्षुधः क्षुधाया भयं क्षुद्भयम् । तस्कराद्भयं तस्करभयम् । धनानि च धान्यानि चेति धनधान्यानि, तैर्युतानीति धनधान्ययुतानि ।

व्याकरणम्—मज्जन्ति = मस्ज् + लट् । प्रमुदिताः = प्र + मुद् + क्तः । योग्यतावशादत्र भविष्यति भविष्यन्तीति क्रियाऽध्याहारः ।

वाच्यान्तरम्—सर्वैः प्रमुदितैर्भविष्यते ।

कोषः—'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इत्यमरः ।

'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः ।

'अशनाया बुभुक्षा क्षुद्' इत्यमरः ।

'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः ।

सारार्थः—रामराज्ये कुतोऽपि भयं न भविष्यति, नहि केषां चिदकालमरणं सम्भविष्यति, न कुत्राप्यन्नवैकल्यम्, अतः सत्ययुगे यथा प्रजाः सानन्दास्तथैव तदानीं मुदिता भविष्यन्तीति ।

भाषाऽर्थः—( राम जी के राज्य में ) किसी को अग्नि से भय कुछ भी नहीं होगा, और ( कोई भी ) प्राणी पानी में डूब कर न मरेगा, न वायु से ही किसी को प्राण भय पहुँचेगा, न तो बुखार ही किसी को सतायेगा, न तो भूख के मारे कोई मरेगा, कहीं भी चोरी नहीं होगी, देहात शहर सब जगह धन धान्य से भरे रहेंगें, जैसे सत्ययुग में लोग खुश थे, वैसे ही इस त्रेता युग में भी आराम से रहेगें ॥ ९२ ॥ ९३ ॥

**अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।। ९४ ।।**
**गवां कोट्ययुतं दत्वा विद्वद्भ्यो विधिपूर्वकम् ।**
**असंख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः ।। ९५ ।।**

अन्वयः—महायशाः, बहुसुवर्णकैः, अश्वमेधशतैः, इष्ट्वा, तथा, विद्वद्भ्यः, विधिपूर्वकं, गवां, कोट्ययुतं, दत्वा, ब्राह्मणेभ्यः, असङ्ख्येयं, धन, दत्वा ।

व्याख्या—महायशाः = अतुलकीर्तिः, बहुसुवर्णकैः = अपरिमितकाञ्चनदक्षिणैः, अश्वमेधशतैः = त्रिशतसंख्यकाश्वमेधयज्ञैः, इष्ट्वा = यज्ञं कृत्वा, तथा = अपि च, विद्वद्भ्यः = पण्डितेभ्यः, विधिपूर्वकम् = यथाविधि, ( स्वर्णश्रृङ्गीं रौप्यखुरां मुक्तादामविभूषिताम् । पृष्ठास्तरणसंयुक्तां दद्याद्गां कांस्यदोहनाम् । ) इत्युक्तविधिना । गवाम् = सवत्सधेनूनां, कोट्ययुतं = कोटीनां दश सहस्रम्, १००००००००००० एतन्मितम् । दत्वा = समर्प्य, ब्राह्मणेभ्यः = दैन्यपात्रत्वयुक्तेभ्यो विप्रेभ्यः, असंख्येयम् = अपरिगणनीयम्, धनं = वित्तं, ( च ) दत्वा = प्रदाय ।

समासादि—अश्वस्य मेधो हिंसा येषु तेऽश्वमेधाः, तेषां शतान्यश्वमेधशतानि तैरश्वमेधशतैः । बहूनि सुवर्णकानि दीयन्ते येषु ते बहुसुवर्णकाः क्रतुविशेषास्तैर्बहुसुवर्णकैः ।

व्याकरणम्—इष्ट्वा = यज् + क्त्वा । दत्वा = दा + क्त्वा ।

वाच्यान्तरम्—अस्य श्लोकस्योत्तरेण सम्बन्धान्न वाच्यान्तरमत्र, किन्तु तेनैव सहेति बोध्यम्

 

कोषः—'विद्वान् विपश्चिद्दोषज्ञः' इत्यमरः । 'विधिर्विधाने दैवे च' इति विश्वः ।

सारार्थः-बहुसुवर्णदानप्रधानान् यज्ञांस्तथा त्रिशतवारमश्वमेधयज्ञमपि, कृत्वा गोसेवकेभ्यो द्विजेभ्यो गवामेकं निखर्वं दत्वा तथा ब्राह्मणेभ्योऽगणनीयं धनं च दत्वा देशे शान्तिः स्थापिता रामेणेति ।

भाषाऽर्थः—अतुलकीर्त्तिशाली राम जी बहुत सुवर्ण की दक्षिणा से युक्त बहुसुवर्णक नामक बहुत से यज्ञ तथा तीन सौ वार अश्वमेध यज्ञ करके तथा पण्डितों को विधि पूर्वक एक निखर्व १००००००००० गाय दान देकर, तथा ब्राह्मणों को असंख्य धन देकर ॥ ९४ ॥ ९५ ॥

राजवंशान् शतगुणान् स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ॥९६॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ९७ ॥

अन्वयः—राघवः, शतगुणान्, राजवंशान्, स्थापयिष्यति, रामः, अस्मिन्, लोके, चातुर्वण्यं, स्वे, स्वे, धर्मे, नियोक्ष्यति, ( तथा च ) रामः, दशवर्षसहस्राणि, दशवर्षशतानि, च, राज्यम्, उपासित्वा, ब्रह्मलोकं, प्रयास्यति ।

व्याख्या—राघवः = रघुवंश्यः, राम इत्यर्थः । शतगुणान् = अनेकान्, राजवंशान् = भूपकुलानि, स्थापयिष्यति = निवेशयिष्यति, तथा—रामः = कौशल्यातनयः, अस्मिन् = मर्त्यसंज्ञे, लोके = भुवने, मर्त्यभुवन इत्यर्थः । चातुर्वर्ण्यं = चतुर्वर्णान्, ब्राह्मणक्षत्रियवैश्यशूद्रानित्यर्थः । स्वे स्वे = निजे निजे, धर्मे = वर्णाश्रमधर्मे इत्यर्थः । नियोक्ष्यति = प्रवर्त्तयिष्यति । अर्थाद्—रामे राज्यं शासति, नहि केऽपि वर्णा भिन्नवर्णधर्मनिरता भविष्यन्तीति । तथा—रामः = भरताग्रजः, दशवर्षसहस्राणि = दशसंख्यकसहस्रवर्षाणि, दशवर्षशतानि = एकसहस्रवर्षाणि, एतदुभययोगेनैकादशसहस्रसंख्यकवर्षाणीत्यर्थः । राज्यं = प्रजापालनविधानभारम्, उपासित्वा = उपास्य, परिपाल्येत्यर्थः । ब्रह्मलोकं = वैकुण्ठं, प्रयास्यति = गमिष्यति । देवीभागवतेऽपि—"एकादशसहस्राणि वर्षाणि पृथिवीतले । कृत्वा राज्यम्...३ स्कं० ३० अ० ।

समासादि—राज्ञां वंशा राजवंशास्तान् राजवंशान् । चत्वारश्च ते वर्णाश्चतुर्वर्णास्त एव चातुर्वर्ण्यम् । स्वार्थे ष्यञ् ।

व्याकरणम्—स्थापयिष्यति = स्था + णिच् + लृट् । नियोक्ष्यति = नि + युज् + लृट् । उपासित्वा = उप + आस् + क्त्वा । प्रयास्यति = प्र + या + लृट् ।

वाच्यान्तरम्—राघवेण राजवंशाः स्थापयिष्यन्ते, शताश्वमेधादि कृतवता रामेण लोके चातुर्वर्ण्यं ( चत्वारो वर्णाः ) स्वे स्वे धर्मे नियोक्ष्यते, रामेण ब्रह्मलोकः प्रयास्यते ।

कोषः—'लोकस्तु भुवने जने' इत्यमरः ।

सारार्थः-रामेणानेके राजवंशाः स्थापयिष्यन्ते तथा रामे राज्यं प्रशासति, सर्वे वर्णाः स्वस्ववर्णधर्मे निरता भविष्यन्ति केऽपि न ।भिन्नधर्मावलम्बिनस्तदानीं तथा रामराज्यसमयएकादशसहस्रवर्षसंख्यको भविष्यतीति ।

भाषाऽर्थः—रामजी सैकड़ों (गुने) अर्थात्—अनगिन राजवंशों की स्थापना करेंगे, और इस मर्त्यलोक में चारो वर्णों को अपने २ धर्मों में ( ब्राह्मणों को, अध्ययन, अध्यापन, यजन, याजन, दान, प्रतिग्रह, इन धर्मों में, क्षत्रियों को प्रजापालन, तथा गोब्राह्मणरक्षण में, वैश्यों को वाणिज्य, और पशुपालन तथा कृषिकार्य में, शूद्रों को ब्राह्मण सेवा आदि में)लगावेंगे, और रामजी १० हजार वर्ष और १ हजार वर्ष अर्थात् ११ हजार वर्ष तक राज्य करके वाद ब्रह्मलोक पधारेंगे ॥ ९६ ॥ ९७ ॥

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ।
यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते ॥ ९८ ॥

अन्वयः—यः, पवित्रं, पापघ्नं, पुण्यं, वेदैः, च, सम्मितम्, इदम्, रामचरितम्, पठेत्, (सः) सर्वपापैः, प्रमुच्यते ।

व्याख्या-यः = कश्चिद्, जनः । पवित्रम् = चित्तशोधनम्, पापघ्नम् = सकलकल्मषहरम्, पुण्यम् = निखिलपुण्यसाधकम्, च = पुनः, वेदैः = श्रुतिभिः, ऋग्यजुःसामाथर्वसंज्ञकैः, समम् = तुल्यम्, वेदाध्ययनवदस्याप्यध्ययने फलमित्यर्थः । ईदृशम्-इदम् = एतद्, अधुनोक्तम् । रामचरितम्, = संक्षिप्तरामायणं, पठेद् = वेदवत् प्रतिदिनं स्वाध्यायमस्य कुर्यात् । (सः = एतदध्ययनकर्त्ता, सर्वपापैः = निःशेषदुरितैः, प्रमुच्यते = संत्यज्यते, सर्वेभ्यः पापेभ्यो विनिर्मुक्तो भवतीत्यर्थः ।

समासादि—पापानि हन्तीति पापघ्नस्तं पापघ्नम् । रामस्य चरितं, रामचरितम् । सर्वाणि च तानि पापानि सर्वपापानि तैः सर्वपापैः ।

व्याकरणम्—पठेत् = पठ् + विधि लिङ् । प्रमुच्यते = प्र + मुच् + कर्मणि लट् ।

वाच्यान्तरम्—येन रामचरितं पठ्यते, सर्वपापानि तं प्रमुञ्चन्ति ।

सारार्थः—य इदं वेदोपमं मूलरामायणं प्रत्यहं पठेत्तस्य त्रिविधपापनाशपूर्वकं सर्वविधपुण्यसंचयो भवेत् ।

भाषाऽर्थः—जो (कोई) परम पवित्र पापका नाश करने वाला, पुण्यप्रद, वेद के समान, (ऐसे संक्षिप्त इस) रामचरित (याने मूलरामायण) को पढेगा, (वह) सब पापों से छूट जायगा ॥ ९८ ॥

एतदाख्यानमायुष्यं पठन् रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९९ ॥

अन्वयः—एतद्, आयुष्यं, रामायणम्, आख्यानं, पठन्, नरः, सपुत्रपौत्रः, सगणः, प्रेत्य, स्वर्गे, महीयते ।

व्याख्या—एतद् = इदम्, अधुनोक्तम् । आयुष्यम् = आयुर्वर्धकम्, रामायणम् = रामचरितम्, आख्यानम् = कथानकम्, पठन् = अभ्यस्यन्, नरः = मनुष्यः, सपुत्रपौत्रः = पुत्रपौत्रैः सहितः, भूत्वाऽन्ते । सगणः = सपरिवारः, एकदैव नहि भूलोके कुलशेषः, किन्तु यथा यथा यदा यदा तत्कुलजो म्रियते, तदा तदा । प्रेत्य = पूर्वदेहं त्यक्त्वा, स्वर्गे = देवलोके, महीयते = पूज्यते, स्वर्गिभिः सत्कृतो मोदत इत्यर्थः ।

समासादि—रामोऽयनं प्रतिपाद्यो यस्य तद् रामायणन्तद् । पुत्रस्यापत्यानि पुमांसः पौत्राः पुत्राश्चेति पुत्रपौत्राः, तैः सह वर्तते यः स सपुत्रपौत्रः ।

व्याकरणम्—पठन् = पठ् + शतृ । प्रेत्य = प्र + इण् + ल्यप् । महीयते = महीङ् + कण्ड्वादित्वाद् यक् + लट् ।

वाच्यान्तरम्—रामायणं पठता नरेण स्वर्गे (देवैः) महीय्यते ।

कोषः—'आख्यानं तु कथानकम्' इति शब्दार्णवः ।

सारार्थः—इदं रामायणं यः पठिष्यति, स इह चिरजीवी, पुत्रपौत्रैः संयुतो भूत्वाऽन्ते स्वर्गञ्च गमिष्यतीति ।

भाषाऽर्थः—इस आयु को बढ़ाने वाली रामायण नामकी कथा को पढ़ता हुआ मनुष्य (इस दुनियां में) पुत्र पौत्रों के सहित तथा दासी दासादिकों के सहित मरने के पीछे स्वर्ग में (जाकर देवताओं से) सत्कार पाता है ॥ ९९ ॥

पठन् द्विजो वागृषभत्वमीयात्, स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ १०० ॥

अन्वयः--( एतद् रामायणं ) पठन्, द्विजः, वागृषभत्वम्, ईयात्, स्यात्, क्षत्रियः, भूमिपतित्वम्, ईयाद्, वणिग्, जनः, पुण्यफलत्वम्, ईयात्, च, शूद्रः, जनः, अपि, महत्त्वम्, ईयात् ।

व्याख्या—'एतद् रामायणमाख्यानम्' इति पूर्वपद्यादानेतव्यम् । पठन् = अधीयानः, द्विजः = ब्राह्मणः, वागृषभत्वम् = वाक्पतित्वम्, वचनरचनापटुप्रधानत्वं चेति । ईयात् = प्राप्नुयाद्, ब्राह्मणस्य सर्वं प्राप्यं वाचैव प्राप्तं भवतीति । स्याद् = यदि, ( अत्र 'स्याद्' इत्यस्य यद्यर्थकेऽव्यये प्रयोगः।) क्षत्रियः = बाहुजः, (तदा रामायणं पठन् सन्) भूमिपतित्वम् = पृथ्वीश्वरत्वम्, ईयात् = प्राप्नुयात्, यतो हि क्षत्रियस्य पृथ्वीश्वरत्वमेव सर्वेभ्य इष्टं वस्तु, इह संसारेऽस्ति तेन युक्तमुक्तमेतदपि । वणिग् = वैश्यः, व्यापारविधाता । जनः = लोकः, पण्यफलत्वं = क्रयविक्रयलाभरूपम्, ईयात् = प्राप्नुयाद्, यतो वैश्यस्य 'व्यापारे लाभो भवत्वि'-तोऽधिकमैहिकमिच्छितं न किमप्यस्ति, अत इदमपि महत्सुष्ठु वर्त्तते । च = पुनः, शूद्रः = चतुर्थो वर्णः, जनः = लोकस्तु, अपि = निश्चयेऽर्थं, महत्त्वम् = स्वजातिमान्यत्वम्, ईयात = प्राप्नुयात्,

तथा ब्राह्मणः, 'तपः स्वाध्यायनिरतम्' इत्यादि महदनुष्ठानलब्धालौकिककवित्वप्रतिभं वाल्मीकिं विचिन्त्य विश्वामित्रस्याद्भुतयोगबलं, भरद्वाजवसिष्ठप्रभृतिमहर्षिचरितं च सन्धार्य कथं न तच्छिक्षणानुकरणतया वागृषभत्वं लभेत ? अवश्यमेव प्राप्नुयात्तत् ।

एवं दशरथस्य धर्मैकनिष्ठतां, जनकस्य दृढप्रतिज्ञताम्, रामस्य स्वार्थशून्यताम्, भरतस्यातुलोदारताम्, रावणस्य राजनीतिं, च मनसि विभाव्य कथं न क्षत्रियो ज्ञातराजनीतिर्भूत्वा भूपतित्वं लभेत ? ।

एवमेव क्षीणोऽपि वैश्यः, हनूमत उद्योगं साहसं च विचिन्त्य नियतं समुद्रपरपारपर्यन्तमपि व्यापारं कुर्वन् पण्यफलमपूर्वं कथं न लभेत ? ।

एवञ्च शूद्रोऽपि हनूमद्विभीषणादीनां शबर्याश्च स्वामिसेवानियमेनाद्भुतप्रतिष्ठालाभं ज्ञात्वा, कथं न सेवायामादरं कृत्वा महत्संसर्गान्महत्त्वं लभेतेति ? ।

अत्र चातुर्वर्ण्यस्य स्वस्वाभिलषितातुलमहत्त्वलाभोपदेशदर्शनादस्य रामायणस्याध्ययनं श्रवणं मननञ्च परमावश्यकं चेति प्रदर्शितम्, सावधानधिया-एतत् पठतः सर्वो दुर्गुणोऽपसर्पति सकला गुणाश्च स्वयं तत्र स्थातुमायान्ति, अतः सर्वैर्हिताभिलाषिभिर्जनैः पठनीयमेवैतच्चरितमिति भावः ।

सकलविद्याबलबुद्धिधनविक्रमशालिनमपि रावणं तृणवन्मत्वा, तापसं राज्यच्युतमपि राममनुरक्ता सीता आसीदिति विचार्य कथं न-अकुलीनाऽपि कुलीना भविष्यति ? नीचेन निषादेन रामस्येव, कथं न श्रीमतो जनस्य स्वबान्धवेन साधारणेन सह समानो व्यवहारः कर्त्तुमुचितः ? ।

समासादि-द्वाभ्यां जन्मसंस्काराभ्यां जायत इति द्विजः । वाचि ऋषभः, वागृषभस्तस्य भावो वागृषभत्वम् । भूमेः पतिर्भूमिपतिः, भूमिपतेर्भावो भूमिपतित्वम् । पणं मूल्यं तदर्हन्तीति पण्यानि क्रयविक्रयार्हाणि वस्तूनि, तैः साध्यं मूलाद् द्विगुणत्रिगुणवृद्ध्यादिरूपं फलं यस्य तत् पण्यफलम्, तस्य भावः पण्यफलत्वम् ।

व्याकरणम्--पठन् + पठ् + शतृ । ईयात् = इण् + वि० लिङ् ।

वाच्यान्तरम्--पठता द्विजेन वागृषभत्वमीयेत, क्षत्रियेण भूमिपतित्वमीयेत, वणिग्जनेन पण्यफलत्वमीयेत, शूद्रेणापि महत्त्वमीयेत ।

कोष:--'वाग्भारत्यां वचस्यपि' इत्यनेकार्थसङ्ग्रह: ।
'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इत्यमरः ।
'ऋषभः स्यादादिजिने वृषभे भेषजे स्वरे ।
कर्णरन्ध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरस्थितः' इत्यनेकार्थसङ्ग्रहः ।
'पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धने ऽपि च' इत्यमरः ।

सारार्थः--यः कश्चिदिदं संक्षिप्तरामायणं पठेत् स स्वस्वाभीष्टं लभते, अर्थादुक्तसंक्षिप्तरामायणे, चातुर्वर्ण्याचारशिक्षोपदेशो वर्त्तते, अतः सर्वे वर्णाः स्वस्ववर्णानुकूलशिक्षां कथं न प्राप्स्यन्ति ?, तथा योऽलसः स हनुमतोऽनिर्वचनीयमुद्योगं शिक्षाधिया स्वीकुर्यात्तदा कथं नासौ दुःसाध्यमपि सुसाध्यं करिष्यति ? योऽव्यवस्थितचित्तः शिक्षाधिया इदं पठित्वा हृदये स्थापयेत्तस्य, रामस्य स्वार्थत्यागपूर्वकं नियमदृढत्वम्, भरतस्य चालौकिकं राज्यत्यागं विलोक्य कथं न परार्थबुद्धिर्व्यवस्थितचित्तताऽपि भवेत ? यः सकलशास्त्रपारङ्गतोऽपि नीचकर्मनिरतो भवेत्, स च कथं न रावणवत्सगणो नङ्क्ष्यति, उद्योगी जनो नलस्य समुद्रबन्धनमिव किं दुःसाध्यं न कुर्यात् ? । बलिष्ठोऽपि प्रमादी जनः कथं न वालीव नश्येद् ?, रामस्य वानराणामिव लघूनामपि साहाय्यं कार्यसाधकमेव भवतीति, रामसुग्रीवयोरिवैकविषयलक्ष्यवतोर्मैत्री जायते , हनुमच्चरितं हृदये विधाय कथं न स्वामिभक्तो भवेत् ?।

भाषार्थः—(इस रामायण का) पाठकरता हुआ ब्राह्मण बोलने मे श्रेष्ठता को प्राप्त करेगा, यदि क्षत्रिय ( हो तो ) राज भाव को प्राप्त करेगा ( राजा होगा ), वैश्य हो तो खरीदने बेंचने का फल लाभ प्राप्त करेगा ( लाभ उठावेगा, ) और शूद्र हो तो ( अपनी जाति में ) बड़ाई को प्राप्त करेगा ( जाति के लोग आदर करेगें )

इति श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे प्रथमः सर्गः ।

इति मूलरामायणं समाप्तम् ।



# अथ रामायणपाठेन शिक्षाग्रहणम् ।

( १ ) ब्राह्मणसेवया यज्ञाचरणेन चेह जगति न किमपि दुर्लभं वस्तु विद्यते, यथा जराऽऽतुरस्य दशरथस्य तत्प्रभावादेवेश्वरांशाश्चत्वारस्तनयाः संबभूवुः,

( २ ) अवश्यं दुःखानन्तरं सुखं सुखानन्तरञ्च दुःखं जायते जन्तूनामतः सुखदुःखयोरवसरे स्थिरचित्तेन भवितव्यम् ।

( ३ ) यस्य हेतोर्येषां निश्चलः संकल्पः, स च तेषामवश्यं मिलत्येव, यथा दशरथस्य पुत्राप्तिः, जनकस्य हरधनुर्भङ्गकरणपूर्वकं वरलाभश्चेति ।

( ४ ) सतां सङ्गत्या जनस्य किं किं नापूर्वं गुणरत्नं सिद्ध्यति ? यथा विश्वामित्रसहवासाद्रामलक्ष्मणयोर्दानवहननेनालौकिकं यशः, दिव्यास्त्रलाभः, याज्ञवल्क्यशतानन्दजनकादिभिः परिचयः, त्रैलोक्यरत्नरूपयाऽवर्णनीयरूपसद्गुणया सीतया सह विवाह इत्यादि सञ्जातम् ।

( ५ ) गृहे निवसतां गुणगौरवपरिचयो जनानां विशेषतया न जायते, तेन स्वगुणोत्कर्षप्रकाशाय देशभ्रमणं कर्त्तव्यं, तदा तद्गुणानां सर्वत्र गन्धः प्रसरति, यथा रामस्य विश्वामित्रेण सह भ्रमत एव मारीचादिनिराकरणेन, जनकयज्ञे धनुर्भङ्गेन च लोकोत्तरं यशः प्रसृतम् ।

(६) सर्वेषु शुभकार्येषु विघ्नानि वर्त्तन्त एव, तत्र ये धीरास्तेषां पुरतस्तानि विलीयन्ते स्वयम् , ये चाधीरास्तानेव तानि बाधन्ते, यथा विवाहसमये रामं प्रति परशुरामस्य तर्जनादिकम् ।

( ७ ) दुर्जनसंसर्गो न कर्त्तव्यः, तेन साधोरपि मनो वैकृत्यमुपैति, यथाऽतीव सौजन्ययुक्तायाः कैकेय्या मन्थरासङ्गाद्, अतो दुर्जनाद् दूरमेव स्थातव्यं सर्वैः साधुभिः ।

( ८ ) स्त्रीणां विश्वासः कदाऽपि नो विधेयः, न च तस्यै हृदयं दद्याद् , अन्यथा प्राणहानिशङ्का जायते, यथा दशरथस्य प्राणनाशोऽभूत् ।

( ९ ) यः किल राजसिंहासनारूढप्रायस्य, तत्क्षणे पितुर्वनगमनाज्ञयाऽरण्यं प्रस्थितस्य रामस्य प्रसङ्गोपाख्यानं पठिष्यति, स कथं न पितुर्मातुश्चाज्ञापालनं करिष्यति ? ।

( १० ) यः स्वार्थं मुञ्चति, तस्यैव स्वार्थसिद्धिर्भवति, यः स्वार्थाय परार्थबाधामाचरति, तस्य प्रत्युत स्वार्थहानिर्जायते, यथा यद्यपि रामः प्राप्तमपि राज्यं भरतस्यार्थे त्यक्तवान् , तथाऽपि चतुर्दशवर्षाणि वनवासिनां शासको भूत्वा, तदूर्ध्वं पुनरयोध्यायामपि राजसिंहासनं लब्धवानेव, अथ कैकयी तु स्वपुत्रार्थं रामस्य राज्याभिषेके विघ्नं कृतवती, तेन तु नहि भरतः सुखी, अपि तु स्वयं विधवाऽनाथा च जाता ।

( ११ ) या वनिता वनं प्रस्थितेन रामेण सहानुव्रजन्त्या जानक्याः कथानकं स्मरिष्यति, सा कथं न पतिव्रता, पतिप्राणा च भविष्यति ? ।

( १२ ) यो वनवासिनां सीतारामलक्ष्मणानां चरितं पठिष्यति स सदा सर्वस्यामवस्थायां प्रसन्नः स्थास्यति ।

( १३ ) सर्वत्र द्वित्रचत्वारः सखायः, शत्रवश्च तिष्ठन्त्येव, नहि केवलं सर्वे शत्रवः, नहि केवलं मित्राणि च संजायन्ते, यथा रामसदृशस्यापि वने कियन्तः शत्रवः ।

( १४ ) संकटेऽपरिचितप्रदेशे च वृद्धस्य प्रसिद्धस्य संगत्योपदेशो ग्राह्यः, यथा रामो भरद्वाजाश्रमं गत्वा तस्माद् वनस्य सर्वं रहस्यं ज्ञातवान् ।

( १५ ) स्त्री एव कलहस्य, सर्वापदोऽपि मूलम् , यदि शूर्पणखा रामायणे पात्रं न स्यात्, तदा रामरावणयोर्लौकिकदृष्ट्या प्रायो विरोधो न भवेत् ।

( १६ ) अतिरूपया कन्यकया विवाहोऽनर्थमूलक एव, यथा रामः सीताया अलौकिकरूपसम्पदा रावणेन हृतायाः कारणादत्यन्तं खिन्नो जातः ।

( १७ ) स्वगृहे चेत्साधारणमपि वस्त्रं भाण्डं वर्त्तते, तदा तेनैव निर्वाहः कार्यः, नहि विशेषं किमपि वस्तु विलोक्य मनो मोक्तव्यम्, अन्यथा महती हानिर्भवति, यथा काञ्चनमृगमवलोक्य रामस्य सीताहरणं जातम् ।

( १८ ) अनाथाऽबलारक्षणार्थं रक्षणीयप्राणस्याप्युत्सर्गः कर्तव्य एव, यथा जटायुषा गृध्रेण सीताऽर्थे कृतम् ।

( १९ ) प्रत्यक्षे शङ्कितोऽपि नीचः शत्रुः, परोक्षेऽपि हानिं करोत्येव, यथा रावणो रामस्य सीताहरणम् ।

( २० ) नीचजातिकृतोऽपि सत्कारः स्वीकर्त्तव्य एव, यथा रामः शबर्याः सत्कारं सहर्षमङ्गीकृतवान् ।

( २१ ) विपत्तौ निश्चयमीश्वरो नानारूपेण साहाय्यं करोति, अतो विपदि धैर्यावलम्बनं युक्तम्, यथा रामस्य सीताहरणदशायां हनूमत्सुग्रीवप्रभृतयः सहायकाः ।

( २२ ) सच्चरित्र एव जनो यदि मध्यस्थस्तदोदासीनावपि सम्मेलयति, मध्यस्थोऽसच्चरित्रस्तु सम्मिलितावपि विघटयत्येव, यथा हनुमान् रामसुग्रीवयोः संयोजकः, शूर्पणखा तु रामरावणयोर्विरोधवर्धयित्री ।

( २३ ) तुल्यलक्ष्यवतोर्वास्तवं प्रेम भवति, भिन्नभिन्नलक्ष्ययोस्तु प्रेम क्षणिकमेव यथा स्त्रीविच्छेदार्त्तयोः रामसुग्रीवयोर्मैत्री, भिन्नलक्ष्यवतो रामवालिनोर्वैरम् ।

( २४ ) येन मैत्रीमिच्छेत्तस्यादावेवोपकारमाचरेत्, तदा पश्चात्स्वस्यापीष्टसिद्धिर्जायते, यथा रामस्य पूर्वं सुग्रीवशत्रुवालिहननात्सीताप्राप्तिः ।

( २५ ) स्नेहो दुःखस्य कारणम्, यतो रामस्य हेतुना सीता, तथा सीतायाः कारणेन रामश्च मिथ एतौ वियोगेन खिन्नौ ।

( २६ ) उद्योगे कृते किं न सिद्ध्यति ? यथा द्वीपान्तरप्राप्ताऽपि सीता कपिना हनुमताऽऽसादिता ।

( २७ ) एकोऽपि चेद् गुणी बुद्धिमांश्च जनः कुले भवेत्तदा सर्वं तत्प्रभावादेव प्रचलन्ति, यथा हनूमतः प्रभावादन्येऽपि कपयः, अथवा नलस्योद्योगेन सर्वे समुद्रमुत्तीर्णाः ।

( २८ ) नहि केनापि सह विरोधः कर्त्तव्यः, येन केनापि मित्रता रक्षणीया, स समये सुखदैव भवति, यथा रामस्य वानरैरुपकारो जातः ।

( २९ ) यावद्दर्पान्धान् न दर्पान्धदृष्ट्या पश्यन्ति, तावत्तेषां प्राकृतिकं ज्ञानं, तथा च परगुणावगमयोग्यबोधो न उत्पद्यते, यथा रामस्य कोपात्समुद्रस्य विनयः ।

( ३० ) प्रभोराज्ञां विनाऽपि तद्विरोधिनोऽनिष्टचिन्तनं कार्यम्, तथा प्रभोराज्ञयाऽपि सहसा तस्य हानिर्न कार्या, तथा प्रभोराज्ञां विनाऽपि प्रभोरुपकारः कर्त्तव्यः, यथा हनूमान् रामाज्ञां विनैव लङ्कां ददाह ।

( ३१ ) येन विरोध उत्पद्यते, तत्पक्षीयस्तेन विरुद्ध्य चेदागच्छेत्, तदा तं यत्नेन मेलयेत्, तेन महानुपकारो भवति, यथा रामस्य विभीषणद्वाराऽसाध्यसिद्धिः ।

( ३२ ) कुदेशेऽपि साधवः, सुदेशेऽप्यसाधवो वर्त्तन्त एव, यथा लङ्कायां विभीषणः, मुनीनां वसतावपि दानवाः ।

( ३३ ) परदारहरणसममन्यद्वंशध्वंसकरं कर्म न विद्यते, यथा रावणः सीतामपहृत्य सवंशो यमस्यातिथिर्बभूव ।

( ३४ ) सद्वंशजातः, सकलविद्यानिष्णातोऽपि जनः कुसंगत्याऽसद्व्यसनेन च निन्द्यो भवति, यथा रावणः ।

( ३५ ) कालवशीभूतेन बान्धवादेः पथ्यं वचनं गरलमिवानुभूयते, अकल्याणमेव येन भवति, तदेवामृतमिव बुध्यते, यथा रावणस्य विभीषणमन्दोदरीप्रभृतीनां वचनं हितमप्यहितमिव ।

( ३६ ) नीचकर्मणा नियतं कस्मिन्नपि समये सर्वेश्वरस्यापि सर्वनाशो भवत्येव, यथा रावणस्य ।

( ३७ ) दृढप्रतिज्ञस्य सर्वमीप्सितमीश्वरः स्वयं साधयति यथा रामस्य ।

एवमनेकाः शिक्षा निःसरन्ति रामायणात् किमधिकलेखेनेति ।

इति संक्षेपतो रामायणपाठेन शिक्षालाभः ।

इति रामायणप्रकरणम् ।

# अथ महाभारतीयशीलनिरूपणाध्यायस्य पात्रपरिचयः ।

देवव्रतो वा भीष्मः—अस्य माता गङ्गा, पिता महाराजः शन्तनुरासीद्, अयमतीव दृढप्रतिज्ञोऽक्षुण्णब्रह्मचर्यो धनुर्धराणामाचार्यः, कौरवाणां पाण्डवानां च पितामहभ्राताऽद्भुतविक्रमवान्, अनेनैव समरे श्रीकृष्णस्यापि प्रतिज्ञा ( नाहं महाभारते शस्त्रं धारयिष्यामीति रूपा ) खण्डिता, महाभारते सर्वत्रायं पितामह इति संज्ञया प्रयुज्यते ।

धृतराष्ट्रः—अयमम्बिकायां व्यासेनोत्पादितो गोलकः पुत्रः, गर्भाधानसमये लज्जया यतोऽम्बिका नयने निमील्य व्यासान्तिकं गताऽत एव तत्पुत्रोऽसौ जन्मान्धः संजातः ।

पाण्डुः—अयं धृतराष्ट्रानुजोऽतीव सुन्दरो वीरश्च पाण्डुरोगाक्रान्तोऽपि ज्येष्ठस्य(१)जन्मान्धत्वाल्लघुरपि राज्ये नियुक्तः सर्वैः ।

युधिष्ठिरः—अयं पाण्डोः प्रथमस्तनयोऽतीव धर्मवान्, अस्य चत्वारोऽनुजा भीमार्जुननकुलसहदेवाभिधाना आसन्, तत्र नकुलसहदेवौ माद्रीसुतौ, इतरे च त्रयो युधिष्ठिराद्याः कुन्तीपुत्राः, एषामेकैव पत्नी द्रौपदी परमपतिव्रताऽऽसीत् ।

कुन्ती—इयं कुन्तिभोजस्य यादवप्रवरस्यात्मजाऽनूढा एवाऽऽतिथ्यतोषितस्य दुर्वाससोमन्त्रप्रभावादाहूतेन सूर्येण बलादुपभुक्ता, ततो जायमानं तनयं कर्णनामानं व्यभिचारगोपनाय धात्रीद्वारा जहौ, पश्चात्पाण्डुना विवाहिता, इयं श्रीकृष्णस्य पितृष्वसाऽत एव तस्य पाण्डवाः पैतृष्वस्रेया भ्रातर आसन् ।

माद्री—इयं मद्रदेशा ( मद्रास ) धिपस्य शल्यस्य भगिनी, अवर्णनीयसौन्दर्यशालिनी आसीद्, यदा कुन्त्यां पाण्डोरेकमप्यपत्यं नोत्पन्नं, तदाऽपत्येच्छया तेनास्या विवाहः सम्वृत्तः, परं चिरादस्यामपि विवाहफलं किमपि न विज्ञायातिखिन्नस्य स्वामिनश्चिन्तादूरीकरणाय कुन्ती मुनिदत्तमन्त्रशक्तिं तस्मै निवेद्य, तदाज्ञया धर्ममाहूय युधिष्ठिरं, वायुमाहूय भीमम्, इन्द्रमाहूयार्जुनं च जनयामास ।

तथा च माद्र्यपि अनपत्यदुःखतप्ततया पतिं सम्प्रार्थ्य तदादेशेन कुन्त्या मन्त्रं गृहीत्वा तेनाश्विनीकुमारावभिमन्त्र्य नकुलसहदेवावुत्पादयामास ।

गान्धारी—इयं गान्धारराजात्मजा धृतराष्ट्रस्य धर्मपत्नी, दुर्योधनादीनां भ्रातृशतानां जनयित्री परमपतिव्रताऽऽसीद्, अनया जन्मान्धवरेण सह स्वविवाहघटनां निशम्यैव पट्टिकया निजनयने पिहिते ।

दुर्योधनः— अयं धृतराष्ट्रस्य ज्येष्ठः पुत्रः कौरवाणां राजा दुष्टचित्तो बाल्यादेव पाण्डवविरोधी, सभायां द्यूतेन पाण्डवं जित्वा, तद्दयितां द्रौपदीं विवस्त्रां कर्त्तुमैच्छत् ।

मान्धाता—अयं सूर्यवंश्योऽयोध्यावासी महाप्रतापी भूपतिरासीद्, अयं स्वपितुः कटिं भित्वा जातः, शतजननीनां पयः पीत्वा बवृधे, अनेन रावणः पराजितः ।

नाभागः—भूपतिविशेषः ।

नारदः—ब्रह्मणो मानसपुत्रः, सर्वगः सर्वज्ञो ब्रह्मर्षिः प्रकृत्या कलहप्रिय आसीत् ।

इन्द्रः—अयं देवानां राजा महापराक्रमी परोत्कर्षासहिष्णुः ।

प्रह्लादः—हिरण्यकशिपोर्दानवस्य पुत्रः परमविष्णुभक्तः स्वाद्भुतविक्रमेण त्रैलोक्यराज्यमात्मायत्तं कृतवान्, अस्यैव पुत्रो बलिः, यो हि वामनेन विष्णुना वञ्चितः ।

शुक्रः—अयं दैत्यानामाचार्यो मन्त्री च देवगुरोर्विरोधी ।

गुरुः—अयं देवानां गुरुः, बुद्धिमत्सु धुरीणः, समये समये दैत्यप्रयुक्तान् देवक्लेशान् दूरीकर्त्तुं दक्षो 'बृहस्पति'—रिति नाम्ना प्रसिद्धः ।

विदुरः—अयमम्बालिकादास्यां व्यासेनोत्पादितो गोलकस्तनयो धर्मांशस्वरूपोऽतिनीतिवेत्ता पाण्डोर्लघुर्भ्राता 'क्षत्ता' आसीद्, अतीव सज्जनः पाण्डवप्रियोऽपि राजाधीनतया दुर्योधनपक्षवर्त्ती एवासीद्, एतद्बुद्धिप्रभावादेव लाक्षागृहाग्नितः पाण्डवा वञ्चिताः, एतत्कृता नीतिः 'विदुरनीति' रिति कथ्यते ।

तथा च शीलवृत्तसत्यधर्माद्याः प्रसिद्धाः, नहि व्यक्तिविशेषाः ।

इति संक्षेपतः शीलनिरूपणाध्यायस्य पात्रपरिचयः ।

---

(१) राज्ये संस्थापितः पाण्डुः कनीयानपि मन्त्रिभिः ।
अन्धत्वाद् धृतराष्ट्रोऽसौ नाधिकारे नियोजितः ॥ भा० द० स्कं० ३ अ० ।

# अथ भारतीयशीलनिरूपणाध्यायस्य संक्षिप्तकथानकम् ।

निवृत्ते महाभारतसमरे शरशय्यायां शयानो भीष्मः "उत्तरायणे त्यक्तजीवितस्य नियतं सद्गतिप्राप्तिर्भवती"ति धियोत्तरायणं प्रतीक्षमाणो यदाऽऽसीत्तदानीं दुर्लभशिक्षालाभाशया कतिपये युद्धोर्वरिताः पाण्डवप्रभृतयस्तं परिवृत्य स्थितास्तेषु सर्वमान्यो युधिष्ठिरो नानाविषयकाननेकान्प्रश्नानपृच्छद् , येषु चैकतमस्त्वेतदध्यायरूपोऽस्ति, वर्त्ततेऽयमध्यायो महाभारतस्य शान्तिपर्वणि राजधर्मप्रकरणे चतुर्विंशत्यधिकशततमः ( १२४ ) ।

तत्र भीष्मं प्रत्युवाच युधिष्ठिरः—

भो पितामह ! धर्मस्य बहुविधेषु शीलम् (सच्चरित्रम्) एव मुख्यम् , न तथा दानजपस्वाध्यायादिका इत्यस्मिन् विषये वर्त्तते सन्देहदोलाऽन्दोलितं मम मनः, तत्तस्य स्थैर्यसंनिधानाय कथय 'किं तद् शीलम् ? तस्य किं तत्त्वम् ?, कथं च तदुपलभ्यत इति, चेत्तदस्मादृशां गोपनीयं न भवेद् ,

एतच्छ्रुत्वा भीष्म उवाच—

भो वत्स ! श्रूयतां तर्हि, यद्यस्तीदृशी ते तद्विषयिणी जिज्ञासा, पुरैकदा भवतां प्रवृत्ते राजसूययज्ञे नानादिग्देशात्सञ्चितामतुलां लक्ष्मीं, तथा देवसभाऽधिकशोभां भवदीयां सभां विलोक्य स्वाभाविकासूयेर्ष्याकलुषितान्तःकरणस्तत्रापि भवद्भिरुद्धतया च विशेषेण सन्तप्तचित्तो दुर्योधनस्तदानीमेव तत्रासीत् कुरुवरं पितरं धृतराष्ट्रमुपगम्यापृच्छत्—

अहो ! पितः ! एतावती समृद्धिः सुरेन्द्रस्यापि सदने नास्ति, न चैतत्समं सुखं देवा अपि प्राप्नुवन्तीति मन्ये, तत्कथमेते चेदृशा भाग्यवन्तः ?, इति वेत्तुमुत्कण्ठामपनय ।

धृतराष्ट्र उवाच--भोः पुत्र ! हन्त !!! त्वयाऽऽप्यतुलनीयमैश्वर्यमाप्तम् , तवानुजाः, सुहृदादयः परिवाराश्चापि सदा किङ्करा इवाज्ञाकरा वर्त्तन्ते, महराजार्हबहुमूल्यलब्धानि पट्टकौशेयादीनि वस्त्राणि परिदधासि, नित्यमगणितमृष्ट पोलिका-लप्सिका कुण्डलिनी शखरिणीः रसाला मोदक रसगोल-पिटक-प्रभृतिभिर्मिष्टान्नैरार्द्रकवटी-कूष्माण्डवटी-तुम्बीवटी-मूलवटी-वृन्ताकालुकादिभिर्व्यञ्जनैर्बहुविधैः षड्रसान्वितै रुचकैरनेकरूपैः, सुकोमलैरन्नैर्दुग्धदधिनवनीतघृतादिभिर्गव्यैश्च नानाविधमकरन्दवासितसुशीतलनिर्मलजलेन सह सुपक्वकदली-रसाल पनस-दाड़िम द्राक्षाऽबीजा-बीजपूरक नारिकेल-जम्बू प्रभृतिभिर्मणिखचितरजतकाञ्चनभाजने भोजनमाचरसि, सायं प्रातश्च राजमार्गे मनोजवाः स्यन्दननियुक्ताः ( योजिताः ) वाजिनो वहन्ति ( भ्रामयन्ति ) त्वाम् , शारदीयपूर्णचन्द्रचन्द्रिकोज्ज्वले स्फटिकसुधाधवले सौधे दुग्धफेननिभशय्योपरि स्वपिषि, नहि साम्प्रतं पाण्डवा अपि प्रतिकूलाः सन्ति, तर्हि कथं त्वमीदृशः साधारणजन इव परसम्पत्तिं विलोक्य विवर्णवदनोऽस्फुटवचनः खिद्यते, इति श्रुत्वा प्राह दुर्योधनः—

पितः ! किमेवं बालमिव मां परिबोधयसि, क्व यौधिष्ठरी सुरेन्द्रस्पृहणीया समृद्धिः, क्व च मदीयोऽनयोः पर्वतपरमाण्वोरिव वर्त्ततेऽन्तरम् ।

नो चेत्तर्हि कथय, युधिष्ठिरमहानसे यथा नित्यं सुवर्णस्थाल्यां दशसहस्रसंख्यका जनाः पीयूषोपममनेकविधमन्नं भुञ्जते, किं तथैव मदीयेऽपि पाकालये ?, तथा च यावन्ति रत्नानि यावन्तो नानाकृतयो मणयस्तत्र विलोकितास्तावतस्तदन्यत्र पुनः क्व द्रक्ष्यामि ?, एवं दिव्यमृदुलपल्लवसुमनैरनेकैर्भक्ष्यपेयलेह्यचोष्यैः पदार्थैश्चालंकृतां तदीयां सभामद्राक्षम् , नहि तादृशी मनोहरा सुधर्माऽपि भवेदिति मन्ये, तत्सर्वं स्मृत्वा विस्मरामि निजनयनस्पन्दनमपि, तथा तित्तिरवर्णान् सिन्धुन दीयान् घोटकांश्च, नानाविधानि पट्टकौशेयांशुकानि च बिलोक्य, तत्प्रभृति मदीयं चेतस्ततोऽप्यधिकसम्पत्तिसम्पादनोपायं विचिन्तयदुद्विग्नं तदपहृतमिव प्रतिभाति, तद्यदि जानासि कमप्युपायं, तर्हि कथय तमिति ? ।

एतच्छ्रुत्वा धृतराष्ट्रोऽब्रवीत्—

भो यद्येवमिच्छसि, तर्हि केवलं शील ( चरित्र ) वान् भव, यतस्त्रैलोक्यमपि शीलवता जेतुं शक्यते, नहि किमपि दुःसाध्यं शीलवतां जनानाम् ।

तथा हि—पुरैकदा सूर्यवंश्यो मान्धाता नाम नरपतिः शीलबलेनैवैकरात्रेणाखिलामिलां जितवान् , एवं जनमेजयेन दिनत्रयेण, नाभागेन सप्तरात्रेण, शीलेनैव वसुधा लक्ष्मीश्च स्वयं तानुपस्थिता ।

दुर्योधनः—तर्हि तच्छीलं कथमुपलभ्यते, तत्सत्वरं कथय ?

धृतराष्ट्रः—

भो पुत्र ! शृणु, पुरैकदा शीलमेवोद्दिश्य पुरातन एक इतिहासो नारदेन वर्णितस्तमुदाहरामि, एकदा शीलबलेन दैत्यप्रवरेण प्रह्लादेन सुरेन्द्रं जित्वा, तस्य पदमपहृतम् , त्रैलोक्यमपि स्वायत्तीकृतम् , ततो हतप्रभो गतश्रीकः सुरेन्द्रः सुरगुरोराश्रमं गत्वा, तं प्रणम्य पुरतोबद्धाञ्जलिर्भूत्वाऽपृच्छत्—

भो गुरो ! सर्वमुदन्तं वेत्सि एव, नहि किमप्यज्ञातं तव विद्यते, अतः कथय किं तज्ज्ञानं ?, येन सदा क्षेममेव भवति' इति श्रुत्वा बृहस्पतिर्मोक्षविषयकं ज्ञानं तस्मै आदिदेश, परन्तु तद् मनसि धृत्वाऽपि पुनरुवाच सुरेन्द्रः—गुरो ! इदं तु ज्ञातम् , इतोऽप्यधिकमपि चेन्मवेज्ज्ञातव्यं, तदा तदपि कृपयाऽऽदिश, तव पादयोः पतामि ।

गुरुः—हे देवेन्द्र ! चिरंजीव, अथ तद्विषयेऽस्ति मत्तोऽपि विशेषज्ञो भृगुदैत्यकुलगुरुस्तत्सकाशं गत्वा जानीहि तत् ।

तत इन्द्रो भार्गवसमीपं गत्वा तस्मादपि श्रेयस्करं ज्ञानं साधारणतयाऽवगम्य, तदधिकज्ञानजिज्ञासाञ्च कृतवान् ।

अथ ज्ञात्वैतामिन्द्रेच्छां भृगुरूचे—

हे इन्द्र ! एतद्विषये मत्तोऽपि विशेषज्ञः प्रह्लादो नाम दैत्यराजो वर्त्तते, इत्युक्त्वाऽन्तर्दधे । ततस्तदानीं विप्रवेषं विधाय मेधावी देवराजः प्रह्लादनिकटं गत्वा स्वकीयं ज्ञातव्यं न्यवेदयत् , तच्छ्रुत्वा दैत्यराज आह—त्रैलोक्यराज्यभारव्यग्रस्य मे नास्त्यवकाशः शिक्षयितुम् ।

इति निराशाजनकमुत्तरं निशम्य कार्यार्थी द्विजवेषधरः सुरेन्द्र उवाच—भो महाराज ! यदा भवतामवकाशो भवेत्तदैव मह्यं शिक्षा देया, नहि मदर्थं भवद्भिः स्वकार्यलोपो विधेय इति' ।

अथेदं धैर्यान्वितं वचनं निशम्य सन्तुष्टः प्रह्लादः शुभे मुहूर्त्ते तस्मै विप्रवेषधरायेन्द्राय ज्ञानतत्त्वं ददौ, ततः स चापि यथोचितां गुरुसेवामाचरन् प्रह्लादस्यातीव विश्वासपात्रं भूत्वा पुनरपृच्छद् , भो ज्ञातव्यं तु सर्वं भवच्चरणानुकम्पया ज्ञातम् , किञ्चिदेतत्कौतूहलमवशिष्टं तदपि कथय, कथं भवद्भिस्त्रैलोक्यराज्यमासादितमिति ?

ततः प्रह्लाद उवाच—अहो विप्रवर ! शृणु, अहं खलु सर्वेषामुपरि वर्त्तमानोऽपि नहि कदाऽपि 'राजाऽस्मीति' गौरवेण ब्राह्मणमपश्यम् , नहि पश्यामीदानीमपि ।

अपि तु तेषामुपदेशमादाय तद्वशे वसामि ते च मम भक्तिं श्रद्धां च विज्ञाय मां मुक्तहृदया भूत्वा सर्वं स्पष्टतया कथयन्ति, तदेतज्जगति अमृतम् , एतदेव सकलशिक्षारहस्यम् , एतदेव दिव्यं चक्षुर्यद् ब्राह्मणोपदिष्टं वचनं शिरसि संरक्ष्य प्रवर्त्तितव्यम् ।

इत्युक्त्वा तस्यातीवशुश्रूषया तोषितो दैत्येन्द्रः सुरेन्द्रं प्रत्युवाच—

'भो विप्र ! तवानुपमया सेवया नितरां तुष्टोऽस्मि, तेनान्यदपि वरं तुभ्यं दातुमिच्छामि, तद्वरं वृणीष्वेति श्रुत्वाऽतिमुदितचित्त इन्द्रो बद्धाञ्जलिरुवाच—

यद्येवमनुग्रहो मयि, तर्हि किं नाम शीलमिति ज्ञातुं महतीच्छा मम वर्त्तते-अयमेव मम वरः, तत इतीन्द्रस्य गिरं श्रुत्वा तस्मै शीलस्योपदेशं तु दत्वा, तदनु, नायं साधारणो जनः,

अवश्यमेव प्रभाववान् जनः कोऽपि, इति चिन्तया विकलो जातः ।

एवं चिन्तयन् स्वस्य शरीराच्छायाऽऽकृति महाद्युति तेजोविशेषं निर्गतं दृष्ट्वाऽतिविस्मयापन्नो दैत्याधिपतिस्तमपृच्छत्' 'को भवान् ?' 'कुतः क्व प्रयासि ?' इत्येवं तेन पृष्टः 'शीलोऽस्म्यहम्' त्वया त्यक्तो गच्छामि वस्तुं भवच्छुश्रूषके ब्राह्मणे, इत्युक्त्वा इन्द्रशरीरे विवेश ।

अथ शीले निर्गते दैत्येन्द्रदेहात् पुनर्धर्मोऽपि पुरुषाकारो निर्गतस्तदनु सत्यं, तदनुवृत्तं, ततो- बलं, तदनन्तरं कमनीयकान्तिमयी लक्ष्मीश्च निर्ययौ ।

तत्र ते धर्मादयोऽपि प्रह्लादेनातिविस्मितेन पृष्टाः सन्तः स्वं स्वं नाम, तथा स्वसहचरं विना न कुत्रापि वसामीति गमनकारणं च विज्ञाप्य विप्रवेषवत इन्द्रस्य परिचयम् ( यो हि विप्रस्त्वया शिक्षितः स तव राज्यापहारक इन्द्र आसीत्तेनैव त्रैलोक्यराज्यधारकहेतुभूतं शालमपहृतमिति ) अपि दत्वा इन्द्रशरीरे विविशुरिति ।

अथ दुर्योधनस्तु सर्वं शीलमाहात्म्यं निशम्य स्पष्टतया शीलं विज्ञातुमत्युत्कण्ठितः स्वजनकं प्रत्युवाच प्रार्थयाञ्चक्रे च—

ततोऽवोचद् धृतराष्ट्रः—भोः पुत्र ! कर्मणा मनसा वाचाऽपि कदाऽपि केष्वपि प्राणिष्वनभिद्रोहः, सदैवानुग्रहः, यथाशक्ति धनवितरणञ्चेति शीलं कथ्यते विज्ञैः ।

तथा चयेन कर्मणा तु परेषामुपकारो नहि भवेत् , प्रत्युत लज्जैव जायते, तत्स्वोपकारकमपि कर्म न करणीयम् , अथवा येन कर्मणा समाजे कीर्त्तिर्बर्द्धते, अपयशो हीयते तदाचरणीयमित्येव शीलस्य लक्षणम् ।

यद्यपि शील ( चरित ) हीना अपि जनाः कदा चित् क्व चिच्छ्रियं लभन्ते, परन्तथाऽपि ते न तां सम्यग् भुञ्जते, अपि तु समूलं नाशमाप्नुवन्ति ।

तदेतद्रहस्यं विदित्वा शीलवान् भव, यदि युधिष्ठिराद्प्यधिकां श्रियमिच्छसीति, एवं धृतराष्ट्रेण दुर्योधनाय शीललक्षणमुक्तम् ।

तत् त्वमपि तथैवाचर, ततस्तत्फलं प्राप्स्यसीति ।

इति संक्षिप्तशीलनिरूपणाध्यायकथा समाप्ता ।

---

# अथ महाभारतीयशीलनिरूपणाध्यायः ।

प्रणम्य पूर्वं गुरुपादपङ्कजं, ध्यात्वा मुहुः श्रीकुलदेवताञ्च ।
कुर्वे ततः शीलनिरूपणस्य व्याख्यां सुधाऽऽख्यां शिशुबोधहेतोः ॥

इमे जना (१)नरश्रेष्ठ ! प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ १ ॥

अन्वयः—हे नरश्रेष्ठ !, भुवि, इमे, जनाः, आदौ, धर्मस्य, शीलम्, एव, प्रशंसन्ति, ततः, मे, महान्, संशयः, ( भवतीति शेषः ) ।

व्याख्या—हे नरश्रेष्ठ! = पुरुषर्षभ ! पितामह ! भीष्म ! । भुवि = पृथिव्याम्, भूलोक इत्यर्थः । इमे = एते सर्वेऽपि, जनाः = लोकाः, ये परिचितास्ते त इत्यर्थः । आदौ = प्रथमम्, धर्मस्य = सत्कार्यस्य, शीलम् = शुद्धचरित्रत्वम्, एव = निश्चयेन, प्रशंसन्ति = कीर्त्तयन्ति, ततः = तस्मात्, तद् युक्तं वा न युक्तमिति तर्कयतः । मे = मम, महान् = परमः, संशयः = सन्देहः, जायत इति शेषः । सर्वेषां धर्माचरणानां मध्ये शीलमेव प्रधानं कथमिति मम मनसि शङ्कोत्पद्यत इत्यर्थः ।

समासादि—नरेषु श्रेष्ठः, नरश्रेष्ठस्तत्सम्बोधनं हे नरश्रेष्ठ ! ।

व्याकरणम्—प्रशंसन्ति = प्र + शंस् + लट् ।

वाच्यान्तरम्—एभिर्जनैर्धर्मस्य शीलमेव प्रशस्यते ।

कोषः—'शुचौ तु चरिते शीलम्' इत्यमरः ।

सारार्थः—महाभारतानन्तरं शरशय्योपरिशायिनं भीष्मं प्रति युधिष्ठिरः पृच्छति, यद् हे पितामह ! सर्वधर्माणां शीलमेव मुख्यं, तत्कथमिति कथयित्वा, मम सन्देहं दूरीकुर्विति ।

भाषाऽर्थः—( शरशय्या पर सोये हुए भीष्मपितामह से युधिष्ठिर पूछते हैं कि, ) हे पुरुषों में श्रेष्ठ ! पितामह भीष्मजी ! संसार में सब लोग धर्मों में शील ( अच्छे स्वभाव ) ही की प्रशंसा करते हैं, इससे ( सो क्यों ऐसा ) मुझे भारी सन्देह होता है ( उसे दूर ) कीजिये ॥ १ ॥

यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ! ।
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते ॥ २ ॥

अन्वयः—हे धर्मभृतांवर ! तद्, यदि, अस्माभिः, ज्ञातुं, शक्यम्, यथा, एतद्, उपलभ्यते, च, तत्, सर्वम्, श्रोतुम्, इच्छामि ।

व्याख्या—हे धर्मभृतां = धार्मिकाणाम्, वर = श्रेष्ठ !, धर्मविद्वर ! इत्यर्थः । तत् = शीलम्, यदि = चेद्, अस्माभिः = अस्मत्सदृशैर्जनैः, ज्ञातुम् = अवगन्तुम्, शक्यम् = योग्यम्, तर्हि । यथा = यद्विधिना, एतत् = शीलम्, उपलभ्यते = प्राप्यते, च = अपि, तद् = शिक्षणविधानम्, सर्वं = निरवशेषं, श्रोतुम् = आकर्णयितुम्, इच्छामि = अभिलषामि । अहमित्यस्याध्याहारः कर्तव्यः ।

समासादि—धर्मं बिभ्रति ये ते धर्मभृतस्तेषां धर्मभृताम् ।

व्याकरणम्—ज्ञातुम् = ज्ञा = तुमुन् । इच्छामि = इष् + लट् । उपलभ्यते = उप + लभ् + कर्मणि लट् ।

वाच्यान्तरम्—मया श्रोतुमिष्यते, ( अहम् ) उपलभे ।

सारार्थः—यदि-अस्मादृशां तच्छीलं कथनार्हं, कथय कथं च तत्प्राप्तुं शक्यते ।

---

( १ ) 'मनुष्येन्द्र ? इति वा पाठः । ( व्याख्या—मनुष्येन्द्र!=मानवेन्द्र !, मनुष्येष्विन्द्रः, मनुष्येन्द्रस्तत्सम्बोधनं हे मनुष्येन्द्र ! )

भाषाऽर्थः—हे धर्मवेत्ताओं में श्रेष्ठ !, पितामह जी ! वह ( शील ) अगर हम से जानने योग्य हो, तो जिस प्रकार से ( वह ) निश्चय करके मिले, वह सब सुनने की मैं इच्छा रखता हूं, (अर्थात्–कृपाकर बताइये, वह (शील) कैसे मिलता है, यह सब मैं सुनना चाहता हूं )॥२॥

कथं तत्प्राप्यते शीलं ? श्रोतुमिच्छामि भारत ! ।
किंलक्षणं च तत् प्रोक्तं ? ब्रूहि मे वदतां वर ! ॥ ३ ॥

अन्वयः—हे भारत !, तद्, शीलं, कथं, प्राप्यते, ? इति, ( अहं ) श्रोतुम्, इच्छामि, हे वदतां वर, ! तत्, च, ( शीलं ) किंलक्षणं, प्रोक्तम्, ( इति ) मे, ब्रूहि ।

व्याख्या—हे भारत ! = भरतभूपवंशोत्पन्न !, तद् = (यद् धर्मस्य प्रधानं लक्षणम्) पूर्वोक्तम्, शीलम् = उत्तमस्वभावः, कथं = केन उपायेन, प्राप्यते = लभ्यते, इति = एतद्, ( अहं = युधिष्ठिरः,) श्रोतुम् = आकर्णयितुम्, इच्छामि = अभिलषामि, ( तथा ) हे वदतां = वक्तॄणां, वर ! = श्रेष्ठ !, परोपदेशकुशल ! इत्यर्थः । तद् = धर्मसुख्यम्, च = तु, किंलक्षणम् = कीदृशस्वभावम्, प्रोक्तम् = कथितम्, लक्षणज्ञैरिति शेषः । (इति), मे = मह्यं, ब्रूहि = कथय ।

समासादि—कानि लक्षणानि यस्य तत् किंलक्षणम् ।

व्याकरणम्—प्राप्यते = प्र + आप् + कर्मणि लट् । इच्छामि = इष् + लट् । ब्रूहि = ब्रू + लोट् ।

वाच्यान्तरम्—तत् कथं ( जनाः ) प्राप्नुवन्ति वा ( अहम् ) प्राप्नोमि, (मया) श्रोतुमिष्यते ( त्वया ) उच्यताम् ।

कोषः—'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः ।

सारार्थः—यद् धर्मेषु मुख्यं तच्छीलं केन विधानेन लभ्यते ? तथा तस्य लक्षणं च किंमिति भो पितामह ! मे कथयेति ।

भाषाऽर्थः—हे भरत वंश में उत्पन्न ! बाबा भीष्म जी ! वह शील कैसे पाया जाता है, वह मैं सुनना चाहता हूं, हे बोलने वालों में श्रेष्ठ ! और उस शील को (लोगों ने ) किस लक्षण वाला कहा है, अर्थात्—लोगों ने उस शील के क्या २ लक्षण बतलाये हैं, इसे ( आप ) मुझसे कहें ॥ ३ ॥

भीष्म उवाच । ( भीष्मपितामह बोले । )

पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ! ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा (१) तथाऽऽगताम् ॥ ४ ॥
इन्द्रप्रस्थे महाराज ! तव सभ्रातृकस्य ह ।
सभायां(२) चाह वचनं तत्सर्वं श्रृणु भारत ! ॥ ५ ॥

अन्वयः—हे मानद !, हे महाराज !, पुरा, इह, इन्द्रप्रस्थे, सभ्रातृकस्य, तव, तथा, आगतां, श्रियं, दृष्ट्वा, तप्यमानेन, दुर्योधनेन, धृतराष्ट्राय, आख्यातम्, सभायां, च ( यत् ) वचनम्, (सः) आह, तत्, सर्वं, हे भारत ! ( त्वं ) श्रृणु ।

व्याख्या—हे मानद ! = सत्कारकारिन् !, महाराज ! = राजशिरोमणे !, पुरा = पूर्वं-

---

( १ ) 'तवागताम् ।' इति वा पाठः । व्याख्या—तव = भवतः, युधिष्ठिरस्येत्यर्थः । आगताम् = समागताम्, परित एकत्रीकृतामिति भावः ।

( २ ) चापहसनम्' । इति वा पाठः । ( अपहसनम् = उपहासः, ) मयासुरेण सभाभवनमीदृङ्निर्मितं, यत्र दुर्योधनस्य स्थले जलभ्रान्त्या धौतवस्त्रोत्थापनम्, क्वचिज्जलेऽपि स्थलभ्रान्त्या यथावद्गमनेन विक्लिन्नतया पतनञ्च विलोक्य द्रौपदी जहास, तदुपहसनमेव दुर्योधनस्य विशेषामर्षजनकं जातम्, तेनैवासौ सभायां द्यूतक्रीडया द्रौपदीं जित्वा विवस्त्रां कर्त्तुमैच्छत्, तदेवापहसनम् ।

 

स्मिन् समये, इह = अत्रैव विषये, इन्द्रप्रस्थे = तन्नामके पुरे, सभ्रातृकस्य = ससहजस्य, भीमार्जुननकुलसहदेवादिभिः सहितस्य, तव = भवतः, महाराजयुधिष्ठिरस्येत्यर्थः । तथा = नानादिग्देशादपरिमेयाम्, आगताम् = आनीताम्, जित्वा समानीतामित्यर्थः । श्रियं = सम्पदम्, लक्ष्मीम्, दृष्ट्वा = विलोक्य, तप्यमानेन = असूयाऽग्नितप्तान्तःकरणेन, दुर्योधनेन = तन्नामकेन धृतराष्ट्रपुत्रेण, धृतराष्ट्राय = स्वपित्रे, आख्यातम् = कथितम्, सभायां = संसदि, च = अपि, ( यद् = यथाभूतं, ) वचनं = वचः, ( सः = दुर्योधनः ) आह = आख्यातवान्, तत् = पूर्वोक्तम्, सर्वं = सम्पूर्णं, हे भारत ! = हे भरतकुलोत्पन्ने युधिष्ठिर। (त्वम्) शृणु = निशामय, ह = इति प्रसिद्धौ ।

समासादि—भ्रातृभिः सह वर्त्तत इति सभ्रातृकस्तस्य सभ्रातृकस्य ।

व्याकरणम्—आख्यातम् = आङ् + ख्या + क्तः । आह = ब्रू + लट् । शृणु = श्रु + लोट् ।

वाच्यान्तरम् = तप्यमान आख्यातवान्, उच्यते, श्रूयताम् ।

कोषः—'स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा' इत्यमरः ।

'समज्या परिषद्गोष्ठी सभासमितिसंसदः' इत्यमरः ।

'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इत्यमरः ।

सारार्थः—पुरा इन्द्रप्रस्थे भवतां राजसूययज्ञावसरे सम्पन्नामतुलां सम्पदं विलोक्यासूयाज्वालासन्तप्तचित्तेन दुर्योधनेन स्वपित्रे यन्निवेदितं, तत्सर्वमहं कथयामि, त्वं सावधानेन चेतसा शृणु ।

भाषाऽर्थः—हे यथा योग्य सत्कार करने वाले महाराज ! पहले इसी विषय में इन्द्रप्रस्थ में भाइयों के सहित तुम्हारी उस प्रकार से (अनेक दिशाओं से ) ले आई हुई (लाकर इकट्ठी की गई हुई ) सम्पत्ति को देख कर ( ईर्ष्याऽग्नि से ) जलते हुये दुर्योधन ने ( अपने पिता ) धृतराष्ट्र से कहा था, और सभा में जो वचन उस ( दुर्योधन ) ने कहा वह सब हे भरत कुलोत्पन्न ! ( युधिष्ठिर ! ) तुम सुनो ।

भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।
दुर्योधन(१)स्तदाऽऽसीनः सर्वं पित्रे न्यवेदयत् ॥ ६ ॥

अन्वयः—तदा, आसीनः, दुर्योधनः, भवतः, ताम्, सभाम्, अनुत्तमाम्, समृद्धिं, च, दृष्ट्वा, सर्वं, पित्रे, न्यवेदयत् ।

व्याख्या—तदा तस्मिन्समये, आसीनः = उपविष्टः, सभायां वर्त्तमान इत्यर्थः । दुर्योधनः = धृतराष्ट्रज्येष्ठपुत्रः, भवतः = युधिष्ठिरस्य, ताम्, = देवदुर्ल्लभाम्, स्मरणीयाम्, अदृष्टपूर्वामित्यर्थः । सभां = परिषदम्, अनुत्तमां = सर्वश्रेष्ठाम्, समृद्धिम् = धनराशिम्, च = अपि, दृष्ट्वा = विलोक्य, असूयाग्रस्तो भूत्वा । सर्वं = सकलं, भवदतुलसम्पद्वर्णनम् । ( आः कुत एतान्यानीतानि ? कथं वा ? अहह कथं ममापि तथैव भविष्यन्ति ?, इत्यादि ) न्यवेदयत् = अकथयत ।

समासादि—न विद्यत उत्तमो यस्याः साऽनुत्तमा ताम् । दुःखेन युध्यत इति दुर्योधनः ।

व्याकरणम्—दृष्ट्वा = दृश् = क्त्वा । न्यवेदयत् = नि + विद् + णिच् + लङ् ।

वाच्यान्तरम्—दुर्योधनेन न्यवेद्यत ।

सारार्थः—युधिष्ठिरस्यातुलां सम्पत्तिमवलोक्यासहमानो दुर्योधनो धृतराष्ट्रायाकथयत् ।

भाषाऽर्थः—उस समय (सभा में ) बैठे हुए दुर्योधन ने, आपकी उस ( देवदुर्लभ ) सभा को और सबों से श्रेष्ठ, धन की राशि को ( अतुल सम्पत्ति का ठाठ बाट ) देखकर सब ( अपने पिता धृतराष्ट्र से ) कहा ॥ ६ ॥

( १ ) 'तदा दीनः' इति वा पाठः । ( तदा=तदानीम्, युधिष्ठिरसमृद्धिदर्शनावसर इति भावः । दीनः=खिन्नः, स्वशत्रोरभ्युदयं दृष्ट्वा दैन्योत्पत्तिः स्वाभाविक्येवेति ) ।

श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवचस्तदा।
अब्रवीत् कर्णसहितं दुर्योधनमिदं वचः ॥ ७ ॥

अन्वयः—च, तदा, धृतराष्ट्रः, दुर्योधनवचः, हि, श्रुत्वा, कर्णसहितं, दुर्योधनम्, इदं, वचः, अब्रवीत्।

व्याख्या—च = अपि, तदा = तस्मिन् काले, धृतराष्ट्रः = तन्नामको दुर्योधनपिता, जन्मान्ध इत्यर्थः। दुर्योधनवचः = तन्नामकपुत्रस्य वाक्यं, हि = निश्चयेन, सावधानो भूत्वेत्यर्थः। श्रुत्वा = आकर्ण्य, कर्णसहितम् = कर्णनाम्ना मित्रेण सह वर्त्तमानम्, दुर्योधनम् = स्वज्येष्ठपुत्रम्, प्रति। इदं = वक्ष्यमाणम्, वचः = वचनम्, अब्रवीत् = अवदत्।

समासादि—धृतं राष्ट्रं येन स धृतराष्ट्रः। दुःखेन युध्यत इति दुर्योधनस्तस्य दुर्योधनस्य वचः, दुर्योधनवचः, तद् दुर्योधनवचः। कर्णेन सह वर्त्तत इति कर्णसहितः।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा। अब्रवीत् = ब्रू + लङ्।

वाच्यान्तरम्—ओच्यत।

सारार्थः—स्वपुत्रकथनं श्रुत्वा कर्णसमक्षे स्वज्येष्ठपुत्रं दुर्योधनं वक्ष्यमाणं वचोऽवदद् धृतराष्ट्रः।

भाषाऽर्थः—और तब धृतराष्ट्र, अपने बड़े पुत्र दुर्योधन की बातों को सुनकर कर्ण के साथ ( बैठे हुए ) उससे यह ( आगे की ) बातें बोले ॥ ७ ॥

धृतराष्ट्र उवाच ( धृतराष्ट्र दुर्योधन से बोले )।

किमर्थं तप्यसे पुत्र ! श्रोतुमिच्छामि तत्त्वतः।
श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यति ॥ ८ ॥

अन्वयः—हे पुत्र !, किमर्थं, तप्यसे, 'तत्' तत्त्वतः, श्रोतुम्, इच्छामि, श्रुत्वा, यदि, 'तत्', सम्यग्, भविष्यति, तदा, त्वाम्, ( अहम् ) अनुनेष्यामि।

व्याख्या—हे पुत्र ! = दुर्योधन !, किमर्थं = कस्मै हेतवे, तप्यसे = खिद्यसे, तत्र खेदस्य किं कारणमिति न जाने। ( तत् = कारणम् ) तत्त्वतः = यथार्थतः, श्रोतुम् = आकर्णयितुम्, इच्छामि = अभिलषामि। तत् स्पष्टं कथयेति भावः। श्रुत्वा = निशम्य, यदि = चेत्, ( तत = त्वयोक्तम् ) सम्यग् = युक्तियुक्तम्, भविष्यति = भवेत्, ( तदा ) त्वाम् = दुर्योधनम्, अनुनेष्यामि = उत्तरेण सन्तोषयिष्यामि, अर्थाद्—यदि भवदुक्तमलीकं स्यात्तदाऽहं सम्यगुत्तरं न दास्यामि, अनेन धृतराष्ट्रो यथार्थवक्तेति सूच्यते।

समासादि—पुन्नाम्नो नरकात्त्रायत इति पुत्रस्तत्सम्बोधनं हे पुत्र !।

व्याकरणम्—तप्यसे = तप् + कर्तरि लट्। श्रोतुम् = श्रु + तुमुन्। इच्छामि = इष् + लट्। श्रुत्वा = श्रु + क्त्वा। अनुनेष्यामि = अनु + नी + लृट्। भविष्यति = भू + लृट्।

वाच्यान्तरम्—त्वया किमर्थं तप्यते, मया श्रोतुमिष्यते, त्वम् मयाऽनुनेष्यसे, यदि-समीचा ( समीचीनेन ) भविष्यते।

कोषः—'यथार्थतस्तत्त्वतश्च वस्तुतः' इति शब्दार्णवः।

सारार्थः—धृतराष्ट्रो दुर्योधनस्यासूयया वदनं म्लानकमलमिव विवर्णं विलोक्य तथाऽस्फुट वचनं च श्रुत्वा तज्ज्ञानार्थं तं पृष्टवान्।

भाषाऽर्थः—हे बेटा ! तुम किस कारण से खेद कर रहे हो, उसे ठीक ठीक ( कहो ) मैं सुनना चाहता हूं, सुन कर यदि वह ठीक होगा, तो तुझे समझाऊंगा ॥ ८ ॥

(१)त्वया च महदैश्वर्यं प्राप्तं परपुरञ्जय !।
किङ्करा भ्रातरः सर्वे मित्रसम्बन्धिनः सदा ॥ ९ ॥

(१) 'यदा त्वां महदैश्वर्यं मित्रसम्बन्धिबान्धवाः। इति वा पाठः। ( व्याख्या—यदा=यस्मिन् सम-

अन्वयः--हे परपुरञ्जय !, ( दुर्योधन !) त्वया, च, महद्, ऐश्वर्यम्, प्राप्तम्, सर्वे, भ्रातरः, मित्रसम्बन्धिनः, ( च ) सदा, किङ्कराः, ( इव तिष्ठन्ति ) ।

व्याख्या—हे पुरपुरञ्जय ! = शत्रुराज्याक्रमणकारक !, यथा पाण्डवोऽपि धनंजयस्तथा त्वमपीति भावः । त्वया = दुर्योधनेन, च = अपि, महद् = अतुलम्, ऐश्वर्यं = विभवः, प्राप्तम् = लब्धम्, यथा पाण्डवेन देशदेशान्तराद् भूपतीन् समरे जित्वाऽसंख्यानि धनान्येकीकृतानि, तथैव त्वयाऽपि भूरिधनान्यगणितान्यानीतानीति भावः । सर्वे = सकलाः, ( तव ) = भ्रातरः = सोदर्य्याः, एकोनशतसंख्यकाः । तथा । मित्रसम्बन्धिनः = सुहृदो बान्धवाश्च, किङ्कराः = सेवकाः,( इव तिष्ठन्ति )। यथा युधिष्ठिरस्य सर्वे भीमाद्या अनुजा आज्ञापालकास्तथैव तवापि, प्रत्युत, तस्यापेक्षया तवैव विशेषेण बान्धवा वृद्धाश्चोपतिष्ठन्ति तदा कथं पाण्डवानामैश्वर्यमवलोक्य ते ईदृशी असूया जातेत्यहं न जानामि, वस्तुतः सन्तापकारणं न विलोक्यते मयेति भावः ।

समासादि—पुराणि जयतीति पुरञ्जयः, परस्य शत्रोः पुरञ्जय इति परपुरञ्जयस्तत्सम्बोधनं हे परपुरञ्जय ! । किमहं करोमीत्येवं ये स्वामिनं वदन्ति ते किंकराः । मित्राणि च सम्बन्धिनश्च मित्रसम्बन्धिनः ।

व्याकरणम्—प्राप्तम् = प्र + आप् + क्तः ।

वाच्यान्तरम्—त्वं महदैश्वर्यं प्राप्तवान्, सर्वैः किङ्करैर्भ्रातृभिः स्थीयते ।

सारार्थः—यथा पाण्डवैरर्जितानि धनानि दृश्यन्ते तथा त्वयाऽप्यर्जितानि, तथा सर्वे परिवारास्तद्वदेवाज्ञाकरास्तदा किं स्वतोऽधिकमाशङ्क्य त्वं खिद्यसे, तद् वदेति ।

भाषाऽर्थः—हे शत्रु के नगर को जीतनेवाले दुर्योधन ! तूं ने भी तो बड़ी सम्पत्ति प्राप्त ( एकट्ठी ) की और तेरे दोस्त और भाई बेरादर भी तो हर वक्त आज्ञाकारी बने रहते हैं, ( तब क्यों यह देख, दुःखी होते हो ) ॥ ९ ॥

आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
(१)आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥ १० ॥

अन्वयः—प्रावारान्, आच्छादयसि, पिशितौदनम्, अश्नासि, आजानेयाः, अश्वाः, वहन्ति, केन, हरिणः, कृशः, असि ।

व्याख्या—प्रावारान् = उत्तरीयवस्त्राणि, कश्मीरपट्टकौशेयादीनीति भावः । ( त्वम् ) आच्छादयसि = परिधत्से, पिशितौदनम् = मांसमिश्रितान्नम्, अश्नासि = भोजनं करोषि, तथा । आजानेयाः = कुलीनाः, प्रसिद्धोत्तमघोटकवंशजातीयाः, श्यामकर्णा इति भावः। अश्वाः = घोटकाः, ( त्वाम् ) वहन्ति = प्रापयन्ति । एते सकलसाधारणभूपदुर्लभाः प्रत्युत महाराजोपभोगयोग्याः पदार्थास्ते सर्वे त्वयि वर्त्तन्त एव, नहि चक्रवर्त्तिभोगयोग्यवस्तुना केनापि त्वं विरहितोऽसि । (तदा) केन = कीदृशेन हेतुना,( त्वम् ) हरिणः = पाण्डुवर्णः, चिन्तयाऽपगतरक्तः सन् । कृशः = दुर्बलः, शुष्क इति भावः । असि = वर्त्तसे, तत् कथयेति त्वया नैवं भाव्यमिति भावः ।

समासादि—पिशितञ्चौदनं च पिशितौदनम् ।

---

ये, मित्रसम्बन्धिबान्धवाः=सुहृत्प्रभृतयः स्वपरिवाराः, महदैश्वर्यं=विपुलधनम्, ( महदैश्वर्यं यस्य तम् ) त्वाम्=दुर्योधनम्, पश्यामीति शेषः ) ।

( १ ) 'आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक !' ॥ ( व्याख्या—हे पुत्रक !=तनय !, आजानेयाः=श्यामकर्णकुलजाताः, घोटका इति यावद् । त्वां=भवन्तं, दुर्योधनमित्यर्थः । वहन्ति=वाहयन्ति, तदा ( त्वं ) कस्मात् कारणाच्छोचसि, नहि चिन्ताहेतुर्विशेषो दृश्यत इति भावः )

व्याकरणम्—आच्छादयसि = आङ् + छद् + णिच् + लट् । अश्नासि + अश् + लट् । वहन्ति = वह् + लट् । असि = अस् + लट् ।

वाच्यान्तरम्—त्वया प्रावारा आच्छाद्यन्ते, पिशितौदनमश्यते अश्वैस्त्वमुह्यसे, केन हेतुना त्वया हरिणेन कृशेन भूयते ।

कोषः—'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं च' इत्यमरः ।

'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः' इत्यमरः ।

'पिशितं तरसं मांसं पललं क्रव्यमामिषम्' इत्यमरः ।

'आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः' इत्यमरः ।

'घोटके वीतितुरगतुरङ्गाश्व तुरङ्गमाः' इत्यमरः ।

सारार्थः—त्वं कश्मीरदेशीयकौशेयादिबहुमूल्यवस्त्राणि धारयसि, प्रत्यहं मृगयाऽऽप्तमृगमांससहितमन्नमत्सि, अतीव वेगवतोऽश्वान् वाहयसि, एतावति महार्हे वस्तुनि वर्त्तमानेऽपि कथमसन्तुष्टो भूत्वा यत्किञ्चित् पाण्डवधनं विलोक्य खिन्नो भवसीति, तन्न युक्तमहं मन्ये, इति ।

भाषाऽर्थः—( तुम ) अच्छे शाल दोशाले ओढ़ते पहनते हो, मांस के साथ अन्न ( प्रतिदिन ) खाते हो, अच्छे खानदानी घोडे पर चलते हो, ( फिर भी ) क्यों पीले पड़ गये तथा सूख गये हो, ( सो बताओ ) ॥ १० ॥

दुर्योधन उवाच । ( दुर्योधन बोले )

दश (१)तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ ११ ॥

अन्वयः—युधिष्ठिरनिवेशने, महात्मनां, स्नातकानां, तानि, दश, सहस्राणि, रुक्मपात्रीभिः, भुञ्जते ।

व्याख्या—युधिष्ठिरनिवेशने = युधिष्ठिरमहानसे, महात्मनाम् = महाप्रभावाणां, स्नातकानां = वेदाध्ययननिरतानाम्, तानि = प्रसिद्धानि, दश सहस्राणि = शतशतानि, अयुतमितानीत्यर्थः । रुक्मपात्रीभिः = स्वर्णस्थालीभिः, भुञ्जते = खादन्ति, भोजनं कुर्वन्तीति भावः ।

समासादि—रुक्मस्य सुवर्णस्य पात्र्यः स्थाल्य इति रुक्मपात्र्यः, ताभी रुक्मपात्रीभिः । युधिष्ठिरस्य निवेशनं युधिष्ठिरनिवेशनं तस्मिन् युधिष्ठिरनिवेशने ।

व्याकरणम्—भुञ्जते = भुज् + लट् ।

वाच्यान्तरम्—महात्मनां दशभिः सहस्रैर्भुज्यते ।

कोषः—'स्वर्णं कार्त्तस्वरं रुक्मं हेम काञ्चनमित्यपि' इति कोषः ।

सारार्थः—युधिष्ठिरमहानसे प्रत्यहमयुतं ब्राह्मणाः सुवर्णस्थाल्यां भुञ्जत इति ।

भाषाऽर्थः—युधिष्ठिर की रसोईं में ( हर रोज ) प्रसिद्ध दश हजार महाप्रभावशाली वेदाध्यायी ब्राह्मण लोग, सोने के थार में खाते हैं ॥ ११ ॥

दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।
अश्वाँस्तित्तिरकल्माषान् (२)वस्त्राणि विविधानि च ॥ १२ ॥
दृष्ट्वा तां पाण्डवेयाना(३)मृद्धिं वैश्रवणीं शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि (४)भारत ! ॥ १३ ॥

---

(१) 'तात सहस्राणि' इति वा पाठः । व्याख्या तात != पितः ! ।

(२) 'रत्नानि' इति वा पाठः । ( व्याख्या-रत्नानि=मणीन् )

(३) 'ऋद्धिमिन्द्रोपमाम्' इति वा पाठः । (व्याख्या इन्द्रोपमाम्=इन्द्रसम्पत्तिसमाम् , ऋद्धिम्=ऐश्वर्यम् )

(४) 'मानद !' इति वा पाठः । ( व्याख्या— मानद !=सम्मानकारक ! ) ।

अन्वयः—हे भारत !, च, अमित्राणां, पाण्डवेयानाम् , तां दिव्यां, दिव्यपुष्पफलान्वितां, सभां, दृष्ट्वा, तित्तिरकल्माषान्, अश्वान्, च, विविधानि, वस्त्राणि, च, सुमहतीं, शुभां, वैश्रवणीम् , ऋद्धिम् , दृष्ट्वा, अनुशोचामि ।

व्याख्या-हे भारत ! = भरतकुलप्रसूत !, पितः ! । च = अपि, अमित्राणाम् = विरुद्धपक्षिणाम्, पाण्डवेयानाम् = पाण्डुपुत्राणाम् , पाण्डवानां युधिष्ठिरप्रभृतिपञ्चभ्रातृणामिति यावद् । ताम् = अदृष्टपूर्वाम् , दिव्याम् = रम्याम् , दिव्यपुष्पफलान्विताम् = स्वर्गीयकुसुमफलसंयुताम्, सभाम् = समितिम् , दृष्ट्वा = विलोक्य, तथा । तित्तिरकल्माषान् = तित्तिरपक्षिवर्णसमानवर्णान्, अश्वान् = घोटकान्, च = पुनः, दृष्ट्वा । तथा । विविधानि = नानारूपाणि, वस्त्राणि = पट्टकौशेयशालादीनि, परिधानानि, उत्तरीयाणि च, दृष्ट्वा । सुमहतीम् = अतिविपुलतमाम् , शुभाम् = परिष्कृताम् , वैश्रवणीं = कौबेरीम् , कुबेरसम्बन्धिनीमित्यर्थः । ऋद्धिम् = सम्पत्तिम् , दृष्ट्वा = विलोक्य, अनुशोचामि = खेदमनुभवामीति ।

समासादि—पुष्पाणि च फलानि चेति पुष्पफलानि, दिव्यानि च तानि पुष्पफलानि दिव्यपुष्पफलानि, तैर्दिव्यपुष्पफलैरन्वितेति दिव्यपुष्पफलान्विता तां दिव्यपुष्पफलान्विताम् । तित्तिरा इव कल्माषाश्चित्रवर्णा ये तान् तित्तिरकल्माषान् । वैश्रवणः कुबेरस्तत्सम्बन्धिनी वैश्रवणी ताम् । न मित्राणीत्यमित्राणि तेषाममित्राणाम् ।

व्याकरणम्—दृष्ट्वा = दृश् + क्त्वा । अनुशोचामि = अनु + शुच् + लट् ।

वाच्यान्तरम्—मयाऽनुशुच्यते ।

कोषः—'सभासमितिसंसदः' इत्यमरः ।

'घोटके वीतितुरगतुरङ्गाश्च तुरङ्गमाः' इत्यमरः ।

'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः ।

सारार्थः—शत्रूणां पाण्डवानां देवसभामिव तां सभां, चित्रवर्णान् घोटकांश्च, कुबेरस्येव समृद्धिं चालोक्याहमनुशोचामीति ।

भाषाऽर्थः—हे भरत कुल में उत्पन्न पिताजी ! और (मैं) शत्रुरूप पाण्डवों की उस दिव्य, स्वर्गीय पुष्प-फलों से युक्त सभा को देखकर और तित्तिर के समान अनेक वर्ण वाले घोड़ों को तथा अनेक प्रकार के वस्त्रों को देखकर, और सबसे अधिक अच्छी कुबेर के समान सम्पत्ति को देखकर शोक कर रहा हूं ॥ १२ ॥ १३ ॥

धृतराष्ट्र उवाच । दुर्योधन से धृतराष्ट्र बोले ) ।

यदीच्छसि श्रियं तात ! यादृशी सा युधिष्ठिरे ।
विशिष्टां वा नरव्याघ्र ! शीलवान् भव पुत्रक ! ॥ १४ ॥

अन्वयः—हे नरव्याघ्र !, तात !, युधिष्ठिरे, यादृशी सा, ('वर्त्तते तादृशीम्') श्रियं, यदि, इच्छसि, वा, विशिष्टाम्, इच्छसि, (तदा) हे पुत्रक !, शीलवान् , भव ।

व्याख्या—हे नरव्याघ्र ! = पुरुषर्षभ !, तात = प्रिय !, दुर्योधन ! । युधिष्ठिरे = ज्येष्ठपाण्डवे, तत्र रिपावित्यर्थः । यादृशी = यथारूपा, सा = उत्तमा श्रीः, ( वर्त्तते तादृशीम् ) श्रियं = सम्पदम् , यदि = चेत् , त्वम् । इच्छसि = अभिलषसि, ( तदा = तर्हि ) हेपुत्रक ! = हेवत्स !, शीलवान् = सत्स्वभावशाली, भव = भवेः । आदौ शीलमेव सम्पादय, ततः श्रीः स्वयमागमिष्यति ।

समासादि—नरो व्याघ्र इव नरव्याघ्रस्तत्सम्बोधने हे नरव्याघ्र ! । शीलमस्यास्तीति शीलवान् ।

व्याकरणम्—इच्छसि = इष् + लट् । भव = भू + लोट् ।

वाच्यान्तरम्—त्वयेष्यते हे पुत्रक ! त्वया शीलवता भूयताम् ।

सारार्थः—पुत्रस्य वचनं श्रुत्वा धृतराष्ट्रः प्रत्युत्तरं ददाति हे पुत्र ! यदि तत्समं तदधिकं वा ऐश्वर्यं लब्धुमिच्छसि, सदाऽऽदौ शीलमर्जय, यतः शीलवतो जनस्य सविधे स्वयं श्रीरुपैति ।

भाषार्थः—हे पुरुषों में श्रेष्ठ प्रिय ! दुर्योधन ! युधिष्ठिर के पास जैसी वह सम्पत्ति है वैसी यदि तुम प्राप्त करने की इच्छा रखते हो अथवा उससे अधिक की तो हे वत्स ! तुम ( सबसे पहले ) शीलवान् होवो ।

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किंचिदसाध्यं वै लोके शीलवतां(१) भवेत् ॥ १५ ॥

अन्वयः—हि, शीलेन, त्रयः, लोकाः, जेतुं, शक्याः, (अत्र) संशयः, न, ( अस्ति ) लोके, शीलवतां, वै, किंचिद्, असाध्यं, नहि, भवेत् ।

व्याख्या-हि =यतः,शीलेन = सत्स्वभावेन,त्रयः = भूभुवःस्वःसमाख्याः,लोकाः = भवनानि, जेतुं = वशीकर्त्तुम्, शक्याः = साध्याः, ( अत्र ) संशयः = सन्देहः, न = नहि, अस्तीति शेषः । लोके = भुवने, शीलवताम् = सत्प्रकृतिमताम्, वै = निश्चयेन, किञ्चित = किमपि, असाध्यम् = अशक्यम्, नहि = नो, भवेद् = भवतु, शीलवतां सर्वं वस्तु साध्यमेव भवतीति भावः ।

समासादि—शीलमस्त्येषामिति शीलवन्तस्तेषां शीलवताम् ।

व्याकरणम्—शक्याः = शक् + यत् । जेतुम् = जि + तुमन् । ।भवेत् = भू + विधिलिङ् ।

वाच्यान्तरम्—लोके शीलवतां केन चिदसाध्येन नहि भूयेत ।

कोषः—'लोकस्तु भुवने जने' इत्यमरः ।

सारार्थः—शीलेनैव सर्वे लोका वशीकर्त्तुं शक्यन्तेऽतो ये शीलवन्तस्तेषां सर्वं करतलगतमिव भवति ।

भाषाऽर्थः—क्योंकि शील ही से तीनों लोक वश में हो सकते हैं, इसमें ( जरा भी ) सन्देह नहीं है, इस दुनियां में शीलवानों के लिये निश्चय करके कुछ भी दुर्लभ नहीं है ।

एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं (२)प्रतिपेदिरे ॥ १६ ॥

अन्वयः—मान्धाता, एकरात्रेण, जनमेजयः, त्र्यहेण, नाभागः सप्तरात्रेण, पृथिवीं, प्रतिपेदिरे ।

व्याख्या—मान्धाता = एतन्नामकोऽयोध्यावासी युवनाश्वराजपुत्रः, एकरात्रेण = एकाहोरात्रेण, जनमेजयः = एतन्नामकः कश्चिद् भूपविशेषः, ( अत्रार्जुनस्य प्रपौत्रो जनमेजय इति नाशङ्कनीयम्, एकनाम्ना प्रसिद्धा अनेके राजानो भिन्नभिन्नसमयेऽभवन्, भवन्ति च, अयं सूर्यवंश्यो विशालनामकनृपस्य वंश्यः, सुमतेस्तनय आसीत् । ) त्र्यहेण = वासरत्रयेण, नाभागः = एतन्नामकः सूर्यवंशोत्पन्नोऽम्बरीषस्य जनको महीपतिरासीत्, सप्तरात्रेण = दिनसप्तकेन, पृथिवीं = सकलां पृथ्वीं, प्रतिपेदिरे = प्राप्ताः,केवलं शीलेनैवेति भावः ।

समासादि—एका रात्रिरेकरात्रम्, तेनैकरात्रेण । त्रयाणामह्नां समाहारस्त्र्यहम्, तेन त्र्यहेण । सप्तानां रात्रीणां समाहारः सप्तरात्रं तेन सप्तरात्रेण ।

व्याकरणम्—प्रतिपेदिरे = प्रति + पद् + लिट् ।

वाच्यान्तरम्—मान्धातृप्रभृतिभिः पृथिवी प्रतिपेदे ।



( १ ) 'सताम्' इति वा पाठः । ( व्याख्या—सतां=सज्जनानाम् ) ।
( २ ) 'प्रतिपेदिवान्' इति वा पाठः । (व्याख्या—प्रतिपेदिवान्=प्राप्तवान् ) ।

सारार्थः--शीलबलेनैव मान्धाता नामको महाराज एकेन दिनेनैव, सम्पूर्णधरित्रीसाम्राज्यं लब्धवान् , जनमेजयस्तु दिनत्रयेण सकलां पृथ्वीं वशीकृतवान् , नाभागनामको राजा तु सप्ताहेन सकलभूमिं शीलेन वशीकृत्य तद्राज्यमासादितवान् ।

भाषाऽर्थः--महाराज मान्धाता ने एक ही रोजमें महाराज जनमेजय ने तीन दिन में और महाराज नाभाग ने एक सप्ताह में इस पृथ्वी को अपने वश में किया ॥ १६ ॥

एते हि पार्थिवाः सर्वे शीलवन्तो दयाऽन्विताः(१) ।
अतस्तेषां गुणक्रीता वसुधा स्वयमागता ॥ १७ ॥

अन्वयः--हि, एते, सर्वे, पार्थिवाः, शीलवन्तः, दयाऽन्विताः, ( आसन् ), अतः, तेषां गुणक्रीता, वसुधा, स्वयम् , आगता ।

व्याख्या—हि = यतः, एते = इमे, सर्वे = पूर्वोदिताः सकलाः, पार्थिवाः = भूमिपतयः, शीलवन्तः = सत्प्रकृतियुक्ताः, तथा । दयाऽन्विताः = करुणासहिताः, क्ष्मासंयुता (आसन्) । अतः = अस्मात् कारणात् , तेषाम् = भूपतीनाम् , गुणक्रीता = गुणैर्वशीकृता, सती । वसुधा = भूमिः, स्वयम् = आत्मना, आगता = समागता ।

समासादि—शीलमेतेषामस्तीति शीलव ... दययाऽन्विता दयाऽन्विताः । गुणैर्दयादाक्षिण्यादिभिः क्रीता वशीकृतेति गुणक्रीता ।

कोषः—'क्षान्तिः क्षमा तितिक्षा च दया च करुणा घृणा' इत्यमरः ।

सारार्थः—मान्धाताऽऽदयो भूपाः शीलवन्तो दयादाक्षिण्यादिभिः संयुता आसन् , अतस्तेषामधीनेयं पृथ्वी, आसीत् ।

भाषाऽर्थः—मान्धाता आदि सब राजा लोग, शीलवान् और दयावान् थे, इसी से उन लोगों के गुण से खरीदी हुई यह पृथ्वी खुद उनके आधीन थी ॥ १७ ॥

दुर्योधन उवाच । ( दुर्योधन बोले ) ।

कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ! ।
येन शीलेन (२)तैः प्राप्ता क्षिप्रमेव वसुन्धरा ॥ १८ ॥

अन्वयः—हे भारत !, तैः, येन, शीलेन, क्षिप्रम् , एव, वसुन्धरा, प्राप्ता, तत्, शीलं, कथं, प्राप्यते, इति, श्रोतुम् , इच्छामि ।

व्याख्या–हे भारत ! = भरतवंश्य?, पितः ! । तैः = मान्धाताऽऽदिभिः, येन = यादृशेन, शीलेन = सत्स्वभावेन, क्षिप्रम् = शीघ्रम्, एव = निश्चयेन, वसुन्धरा = पृथ्वी, प्राप्ता = अधिगता, तद् = भवदुक्तम् , शीलम् = सत्प्रकृतिः, कथम् = केन प्रकारेण, प्राप्यते = लभ्यते, इति = अदः, श्रोतुम् = आकर्णयितुम्, इच्छामि = अभिलषामि, तद् वदेति शेषः ।

व्याकरणम्—प्राप्यते = प्र + आप् + कर्मणि लट् । इच्छामि = इष् + लट् । प्राप्ता = प्र + आप् + क्तः + टाप् ।

वाच्यान्तरम्—तत् कथं प्राप्नोमि, मया श्रोतुमिष्यते ।

सारार्थः—मान्धाताऽऽदिभिर्महाराजैर्येन शीलेनेयं पृथिवी वशीकृता, तत्कथमवाप्यतेति, कृपया मे कथय, मम श्रवणायात्युकण्ठा वर्त्तते इति ।

भाषाऽर्थः—हे भरतवंश में उत्पन्न पिताजी ! उन राजाओं ने जिस (शील) से जल्दी से ही इस पृथिवी को पाया, वह शील कैसे पाया जाता है, यह मैं सुनना चाहता हूँ ॥ १८ ॥

---

( १ ) 'यशोऽन्विताः' इति वा पाठः । ( व्याख्या—यशोऽन्विताः=कीर्त्तिमन्तः ) ।
( २ ) 'संप्राप्ता' इति वा पाठः ( व्याख्या –संप्राप्ता=समधिगता ) ।

धृतराष्ट्र उवाच ( धृतराष्ट्र बोले ) ।

**अत्राप्युदाहरन्तो(१)दमितिहासं पुरातनम् ।**
**नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत ! ॥ १९ ॥**

अन्वयः—हे भारत ! अत्र, अपि, 'विज्ञाः' शीलम्, आश्रित्य, पुरा, नारदेन, प्रोक्तम्, इदम्, पुरातनम्, इतिहासम्, उदाहरन्ति ।

व्याख्या—हे भारत ! = भरतसंज्ञकनृपवंश्य !, दुर्योधन ! । अत्र = शीलविषये, अपि = एव, ( इतिहासज्ञा विज्ञास्तु, ) शीलम् = सत्स्वभावम्, आश्रित्य = अवलम्ब्य, पुरा = पूर्वस्मिन् समये, नारदेन = एतन्नाम्ना ब्रह्मणो मानसपुत्रेण देवर्षिणा, प्रोक्तम् = कथितम्, इदम् = वक्ष्यमाणम्, पुरातनं = प्राचीनम्, इतिहासं = कथानकम्, उदाहरन्ति = उद्गिरन्ति, कथयन्तीति यावद् ।

समासादि—पुराभवं पुरातनं तत् पुरातनम् ।

व्याकरणम्—उदाहरन्ति = उद् + आङ् + हृ + लट् । प्रोक्तम् = प्र + वच् + क्तः । आश्रित्य = आङ् + श्रि + ल्यप् ।

वाच्यान्तरम्—जनैरिदमुदाह्रियते ।

कोषः—'इतिहासः पुरावृत्तम्' इत्यमरः ।

सारार्थः—शीलविषये नारदेनोदाहृतमेकं प्राचीनमितिहासं वृद्धपरम्परया श्रुतं साम्प्रतं कथयामि तत् सावधानो भूत्वा शृणु ।

भाषाऽर्थः—हे भरत वंशमें उत्पन्न ! दुर्योधन ! इसी विषय में ( विज्ञलोग ) शीलका आश्रय लेकर ( शीलके वारे में ) पहले किसी समय में नारद से कहे हुए इस ( आगे कहे जाने वाले ) प्राचीन इतिहास को कहा करते हैं, (उसको तुमसे मैं कहता हूं, सुनो) ॥१९॥

**प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः**
**शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशे कृतम् ॥ २० ॥**

अन्वयः—दैत्येन, प्रह्लादेन, शीलम्, आश्रित्य, महात्मनः, महेन्द्रस्य, राज्यं, हृतम्, त्रैलोक्यं, च, वशे, कृतम् ।

व्याख्या—दैत्येन = दितिवंश्येन, हिरण्यकशिपुपुत्रेण । प्रह्लादेन = एतन्नामकेन, शीलम् = सच्चरित्रमेव, आश्रित्य = अङ्गीकृत्य, महात्मनः = महाप्रभावस्य, महेन्द्रस्य = देवेन्द्रस्य, राज्यम् = त्रैलोक्यराज्यम्, हृतम् = गुणोत्कर्षतयाऽऽत्मसात्कृतम्, त्रैलोक्यं = भुवनत्रयम्, च = अपि, वशे = अधीने, कृतम् = विहितम्, ।

समासादि—महांश्चासाविन्द्रश्च महेन्द्रस्तस्य महेन्द्रस्य । त्रयाणां लोकानां समाहारस्त्रिलोकी सैव त्रैलोक्यम् ।

व्याकरणम्—हृतम् = हृ + क्तः । आश्रित्य = आङ् + श्रि + ल्यप् । कृतम् = कृ + क्तः ।

वाच्यान्तरम्—प्रह्लादस्त्रैलोक्यं वशे कृतवान् ।

सारार्थः—केवलं शीलबलेनैव प्रह्लादेन देवराजो विजितः, त्रिभुवनञ्च वशीकृतम् ।

भाषाऽर्थः—दिति के वंश में उत्पन्न हिरण्यकशिपुके पुत्र प्रह्लाद ने शील का ही आश्रय लेकर जबरदस्त इन्द्रका राज्य हर लिया, और तीनों लोक को वश कर लिया ॥ २० ॥

**ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।**
**तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥ २१ ॥**

---

( १ ) 'अत्राप्युदाहरन्तीममितिहासं पुरावृतम्' इति पाठ एव साधुः । इतिहासशब्दस्य नित्यपुंल्लिङ्गदर्शनात । व्याख्या—पुरावृतम्=भूतपूर्वम् ) ।

अन्वयः—ततः, महाप्राज्ञः, शक्रः, बृहस्पतिं, ( प्रति ) समुपस्थितः, ( सन् ) श्रेयो, वेदितुम्, इच्छामि, इति, तम्, उवाच ।

व्याख्या—ततः = प्रह्लादेनेन्द्रस्य वशीकरणानन्तरम्, महाप्राज्ञः = प्रत्युत्पन्नमतिः, प्राञ्जलिः = बद्धाञ्जलिः, शक्रः = इन्द्रः, बृहस्पतिम्, = एतन्नामकं देवगुरुम्, (प्रति) समुपस्थितः = समीपं गतः, ( सन् ) तत्र । श्रेयः = कल्याणं, स्वोन्नतिकरमुपदेशमित्यर्थः । वेदितुं = ज्ञातुम्, इच्छामि = अभिलषामि, इति, = एतत्, तं = बृहस्पतिम्, उवाच = अवदत् ।

समासादि—प्रकृतोऽञ्जलिर्येन स प्राञ्जलिः । प्रकर्षेण जानातीति प्रज्ञः, स एव प्राज्ञः, महांश्चासा प्राज्ञो महाप्राज्ञः ।

व्याकरणम्—समुपस्थितः = सम् + उप + स्था + क्तः । उवाच = ब्रू + लिट् । इच्छामि = इष् + लट् । वेदितुम् = विद् + तुमुन् ।

वाच्यान्तरम्—बृहस्पतिं समुपस्थितेन शक्रेण स ऊचे, मया श्रेयो वेदितुमिष्यते ।

कोषः—'बृहस्पतिः सुराचार्यो गोष्पतिर्धिषणो गुरुः'इत्यमरः ।

सारार्थः—तदा प्रह्लादेन विजितो देवराजः स्वगुरोर्बृहस्पतेः समीपं गत्वा स्वपराभवदूरीकरणाय शत्रुविजयोपायमपृच्छत् ।

भाषाऽर्थः—उसके ( प्रह्लाद से हार जाने के ) बाद बड़े बुद्धिमान् हाथ जोड़े हुये इन्द्र ने, बृहस्पति के पास उपस्थित होते हुये, 'अपना कल्याण जिससे हो उसे जानने की मैं इच्छा करता हूं' यह उनसे कहा ॥ २१ ॥

ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम् ।
कथयामास भगवान् देवेन्द्राय कुरूद्वह ! ॥ २२ ॥

अन्वयः—हे कुरूद्वह !, ततः, भगवान्, बृहस्पतिः, तस्मै, देवेन्द्राय, परं, नैःश्रेयसं, ज्ञानम्, कथयामास ।

व्याख्या—हे कुरूद्वह ! = कुरुकुलोत्पन्न ! दुर्योधन ! । इति धृतराष्ट्रकृतं सम्बोधनम् । ततः = इन्द्रप्रश्नकरणानन्तरम्, भगवान् = ज्ञानैश्वर्यसम्पन्नः, बृहस्पतिः = एतन्नामकः सुरगुरुः, तस्मै = पृच्छकाय, देवेन्द्राय = देवराजाय, परम् = परमम्, उत्कृष्टमित्यर्थः । नैःश्रेयसम् = शत्रुजालमोक्षविषयकम्, ज्ञानम् = उपदेशरूपम्, कथयामास = उवाच ।

समासादि—देवेष्विन्द्रः, देवेन्द्रस्तस्मै देवेन्द्राय । उद्वहतीत्युद्वहः, कुरूणामुद्वहः कुरूद्वहस्तत्संबुद्धौ हे कुरूद्वह ! ।

व्याकरणम्—कथयामास = कथ + स्वार्थिकणिच् + लिट् ।

वाच्यान्तरम्—भगवता बृहस्पतिना तस्मै ज्ञानं कथयाञ्चक्रे ।

सारार्थः—इन्द्रस्य करुणाऽऽत्मकं वचनं निशम्य बृहस्पतिस्तस्मै पराभवदूरीकरणज्ञानमुवाच ।

भाषाऽर्थः—हे कुरुकुलाधिपति दुर्योधन ! उसके बाद, परम विज्ञानवान् बृहस्पति ने उन पूंछने वाले देवराज इन्द्र से अत्यन्त कल्याण कर उपदेश कहा ॥ २२ ॥

एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ को विशेषो भवेदिति ॥ २३ ॥

अन्वयः—'एतावद्, एव, श्रेयः' इति बृहस्पतिः, अभाषत, इन्द्रः, तु, विशेषः, कः, भवेद्, इति, भूयः, पप्रच्छ ।

व्याख्या—एतावद् = इयत् परं ज्ञानम्, एव = निश्चयेन, श्रेयः = कल्याणकारकम्, इति = ईदृग्वचनम्, बृहस्पतिः = देवगुरुः, अभाषत = उक्तवान् । ( ततः ) इन्द्रः = देवराजः, तु = अपि, ( अस्मादपि ) विशेषः = श्रेष्ठतरः, कः = कश्चिद्, भवेद् = भवतु, इति = ईदृग्, भूयः = पुनः, ( बृहस्पतिम् ) पप्रच्छ = पृष्टवान् ।

व्याकरणम्—अभाषत = भाष् + लङ् । पप्रच्छ = प्रच्छ् + लिट् । भवेत् = भू + विधिलिङ् ।

वाच्यान्तरम्—बृहस्पतिनैवमभाष्यत, इन्द्रेण भूयः पप्रच्छे, केन विशेषेण भूयते ।

कोषः--'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः ।

सारार्थः--निःश्रेयसं ज्ञानमुक्त्वा, एतावदेव श्रेयः साधकं वस्त्वस्तीत्युक्ते बृहस्पतिना, पुनस्तं देवराजोऽपृच्छद् यदतोऽपि किमपि विशेषतरं ज्ञानं विद्यते ? इति ।

भाषाऽर्थः--बस इतना ही कल्याणकर है, ऐसा बृहस्पति ने कहा, उसके बाद फिर भी इन्द्र ने इससे भी और उत्तम कोई है ऐसा फिर बृहस्पति से पूछा ? ॥ २३ ॥

बृहस्पतिरुवाच ( बृहस्पति बोले ) ।

**विशेषो ऽस्ति महांस्तात ! भार्गवस्य महात्मनः ।**
**(१)अत्रागमय भद्रं ते भूय एव सुरर्षभ ! ॥२४ ॥**

अन्वयः--अत्र, हे तात !, सुरर्षभ !, महात्मनः, भार्गवस्य, महान् , विशेषः, अस्ति, 'तस्माद्' भूयः, एव, आगमय, ते भद्रं, 'भविष्यति' ।

व्याख्या--हे तात ! = प्रिय !, सुरर्षभ = देवप्रधान !, इन्द्र ! । अत्र = अस्मिन् ज्ञानविषये, महात्मनः = महाप्रभावस्य, भार्गवस्य = दैत्याचार्यस्य, शुक्रस्येत्यर्थः । महान् = अत्यधिकः, विशेषः = श्रेष्ठ उपायः, अस्ति = वर्त्तते । ( तस्मात् कारणात् त्वं तं प्रति ) भूयः = पुनः, एव = निश्चयेन, आगमय = प्रापय, आत्मानमिति शेषः । ते = तव, इन्द्रस्य । भद्रम् = कल्याणम्, ( भविष्यति ) ।

समासादि--भृगोरपत्यं पुमान् भार्गवस्तस्य भार्गवस्य ।

व्याकरणम्--अस्ति = अस् + लट् । आगमय = आङ् + गम् + णिच् + लोट् ।

वाच्यान्तरम्--भार्गवस्य महता विशेषेण भूयते, त्वयाऽऽगम्यताम् । णिजन्तात्कर्मणि लोट् ।

कोषः--'उशना भार्गवः कविः' इत्यमरः ।

सारार्थः—मदधिकं ज्ञानं शुक्रो जानाति, स ते कथयिष्यति, अतस्तत्सकाशं गत्वा शिक्षस्व ।

भाषाऽर्थः--हे प्रिय देवताओं में प्रधान इन्द्र ! इस विषय में महात्मा शुक्राचार्य का अत्यधिक विशेष ज्ञान है, ( इससे भी ज्यादे ज्ञान, शुक्र के पास है, ) इसलिये, फिर तुम वहां जाओ, तुम्हारा कल्याण होगा ॥ २४ ॥

**आत्मनस्तु ततःश्रेयो (२)भार्गवात् सुमहातपाः ।**
**ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः ॥ २५ ॥**

अन्वयः--ततः, सुमहातपाः, परमद्युतिः सः, प्रीत्या, भार्गवाद्, आत्मनः, श्रेयः, ज्ञानम्, पुनः, आगमयत ।

व्याख्या—ततः = गुरोरुपदेशानन्तरम् , सुमहातपाः = अतितपस्वी, परमद्युतिः = उत्कृष्टकान्तिः, सः = इन्द्रः, प्रीत्या = भक्त्या, भार्गवाद् = शुक्राद् , आत्मनः = स्वस्य, श्रेयः = क्षेमकरं, ज्ञानम् = उपदेशं, पुनः = भूयः, आगमयत = लब्धवान् ।

समासादि—महत् तपो विद्यते यस्य स महातपाः । सु = अतीव महातपा इति सुमहातपाः । परमा = उत्कृष्टा द्युतिः कान्तिर्यस्य स परमद्युतिः ।

---

( १ ) 'तत्रागमय भद्रं ते भूय एव सुरोत्तम' ! ॥ इति वा पाठः ।

व्याख्या—( तत्र=भार्गवाश्रमे, सुरोत्तम !=देवश्रेष्ठ !, देवराजेत्यर्थः । ) शेषउपर्यैव व्याख्यातः ।

( २ ) 'भार्गवः सुमहायशाः' इति वा पाठः । व्याख्या [ भार्गवः=भृगुपुत्रः, सुमहायशाः=प्रसिद्धकीर्त्तिः ]

व्याकरणम्—आगमयत् = आङ् + गम् + णिच् + लङ् ।

वाच्यान्तरम्—सुमहातपसेन्द्रेण श्रेयो ज्ञानमागमय्यत ( णिजन्ताकर्मणि लङ् ) ।

सारार्थः—श्रेयोलाभाय तपस्वीन्द्रो भार्गवान्तिकं भक्त्या गत्वा ततो ज्ञातव्यमधिगतवानिति ।

भाषाऽर्थः—उसके बाद अति तपस्वी, तेजस्वी उन इन्द्र ने भक्ति से शुक्र के पास ( जाकर ) उनसे अपने कल्याणकारक ज्ञान को फिर प्राप्त किया ॥ २९ ॥

तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ॥ २६ ॥

अन्वयः-तेन, महात्मना, भार्गवेण, समनुज्ञातः, अपि शतक्रतुः, पुनः, श्रेयः, अस्ति ?, इति, भूयः, शुक्रम् , आह ।

व्याख्या—तेन = प्रसिद्धेन, दैत्यगुरुणा । महात्मना = महाप्रभावेण, भार्गवेण = भृगुपुत्रेण, शुक्रेणेत्यर्थः । समनुज्ञातः = सम्यगुपदिष्टः, अपि = च, शतक्रतुः = इन्द्रः, पुनः = इतोऽधिकमपि, श्रेयः = कल्याणम् , अस्ति = वर्त्तते ?, इति = एवम् ,भूयः = पुनः, शुक्रम् = भार्गवम् , आह = उवाच ।

समासादि—शतं शतसंख्याकाः क्रतवो यज्ञाः सन्ति यस्य स शतक्रतुः ।

व्याकरणम्—समनुज्ञातः = सम् + अनु + ज्ञा + क्तः । अस्ति = अस् + लट् । आह = ब्रू + लट् ।

वाच्यान्तरम्—समनुज्ञातेन शक्रेण पुनर्भार्गव ऊचे ।

सारार्थः—शुक्रतो दिव्यमुपदेशं लब्ध्वा पुनरधिकज्ञानलाभलिप्सया सविनयं शुक्रमेवाह—यद्यस्ति तर्हि तदप्यादिश मामिति ।

भाषाऽर्थः—उन महात्मा शुक्राचार्यजी से अच्छी तरह से ज्ञानोपदेश प्राप्त किये हुये भी इन्द्र ने इससे और भी अधिक कल्याण कारक ज्ञान क्या है !—ऐसा फिर भी उन्हीं शुक्राचार्य से कहा, अर्थात्-और दूसरे ज्ञानोपदेश देने के लिये पूछा ॥ २६ ॥

भार्गवस्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेणेत्युक्तो(१)ऽदृष्टश्च सोऽभवत् ॥ २७

अन्वयः—तु, सर्वज्ञः, भार्गवः, महात्मनः, प्रह्लादस्य, विशेषेण, ज्ञानम् , अस्ति, इति, आह, ( भार्गवेण ) उक्तः, सः, अदृष्टः, च, अभवत् ।

व्याख्या—तु = किन्तु, सर्वज्ञः = चराचरवृत्तान्तज्ञः, भार्गवः = शुक्रः, महात्मनः = महानुभावस्य, प्रह्लादस्य = हिरण्यकशिपुपुत्रस्य, बलिपितुरित्यर्थः । विशेषेण = आधिक्येन, ज्ञानम् = अवगमकम् , अस्ति = वर्त्तते, इति = एवम् , आह = उक्तवान्, ( ततो भार्गवेणैवम् ) उक्तः = कथितः, सः = इन्द्रः, अदृष्टः = अलक्षितः, च = अपि, अभवत् = जातः ।

समासादि—सर्वान् जानातीति सर्वज्ञः ।

व्याकरणम्—आह = ब्रू + लट् । अस्ति = अस् + लट् । उक्तः = वच् + क्तः । अभवत् = भू + लङ् ।

वाच्यान्तरम्—भार्गवेण, प्रह्लादस्य ज्ञानेन भूयते, इत्युच्यते, (भार्गवेण) उक्तेन तेनादृष्टेनाभूयत ।

सारार्थः—मया भवते यज्ज्ञानमुपदिष्टं, ततोऽप्यधिकं प्रह्लादो जानाति, अतस्तत्सकाशं गच्छ, स ते उपदेक्ष्यति, भार्गवेणोक्तो देवेन्द्रोऽलक्षितोऽभूत् ।

भाषाऽर्थः—किन्तु सर्वज्ञ-शुक्राचार्य ने "महात्मा प्रह्लाद का ( इस विषय में, विशेष

---

( १ ) 'हृष्टश्च सोऽभवत्' । इति वा पाठः । [ व्याख्या=हृष्टः=हर्षितः ; शेष उक्त एव ] ।

रूपसे जानकारी है" ऐसा ( इन्द्र से ) कहा, उसके बाद (शुक्राचार्य से इस प्रकार) कहे गये वे इन्द्र भी अलक्षित होगये ॥ २७ ॥

(१)स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
गत्वा(२)प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ २८ ॥

अन्वयः—ततः, सः, मेधावी, पाकशासनः, ब्राह्मणः, भूत्वा, प्रह्लादं, गत्वा, 'श्रेयः, वेदितुम्, इच्छामि' ( इति ) प्रोवाच ।

व्याख्या—ततः = शुक्रकथनानन्तरम्, सः = ज्ञानार्थी, मेधावी = धारणाऽऽत्मकधीमान्, एतेनोपदेशग्रहणयोग्यता सूचिता। पाकशासनः = इन्द्रः, ब्राह्मणः = विप्रः, शिक्षादानयोग्य-इत्यर्थः । ब्राह्मणस्य शिक्षायामनिवार्यत्वात् । भूत्वा = संभाव्य, आत्मानं ब्राह्मणवेषं निर्मायेत्यर्थः । प्रह्लादम् = एतन्नामकं, निजविजयिनम् । गत्वा = उपगम्य, अनेन ज्ञानशिक्षाऽर्थमपमानं शिरसि निधाय येन केन चित्प्रकारेण यस्मात्कस्माच्चिदपि जनादुपदेशग्रहणं कर्त्तव्यम्, तत्रेर्ष्या न कर्त्तव्या, अत्र प्रह्लादपराजित एव ततो ज्ञानलाभार्थमिन्द्रो गतवानिति महन्निदर्शनम्, अतो नीतौ "अपमानं पुरस्कृत्य मानं त्यक्त्वा च दूरतः । स्वकार्यमुद्धरेद्धीमान् कार्यध्वंसो हि मूर्खता" इत्युक्तम् । भवद्भ्यः । श्रेयः = कल्याणकरमुपदेशम्, वेदितुम् = ज्ञातुम्, इच्छामि = अभिलषामि, इति । प्रोवाच = उक्तवान् ।

व्याकरणम्—भूत्वा = भू + क्त्वा । गत्वा = गम् + क्त्वा । प्रोवाच = प्र + वच् + लिट् । इच्छामि = इष् + लट् । वेदितुम् = विद् + तुमुन् ।

वाच्यान्तरम्--पाकशासनेन प्रह्लाद ऊचे, मया श्रेयो वेदितुमिष्यते ।

कोषः--'विडौजाः पाकशासनः' इत्यमरः ।

सारार्थः--शुक्रादेशानुसारं विप्रवेषं विधाय प्रह्लादसमीपं गत्वा, इन्द्र उक्तवान् यद्भवद्भ्यो ज्ञानोपदेशं लब्धुमागतोऽस्मीति ।

भाषाऽर्थः--उसके बाद उन धारणा शक्तिवाले इन्द्रदेव ने ब्राह्मण का भेष धारण कर प्रह्लाद के पास जाकर "( मैं आप से ) कल्याणकारी उपदेश जानना चाहता हूं" ऐसा (उनसे) कहा ॥ २८ ॥

प्रह्लादस्त्वब्रवीत् विप्रं क्षणो(३)नास्ति द्विजर्षभ ! ।
त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥ २९ ॥

अन्वयः--प्रह्लादः, तु, हे द्विजर्षभ !, त्रैलोक्यराज्यसक्तस्य, (मे), क्षणः, न, अस्ति, ततः, ते, न, उपदिशामि, ( इति ) विप्रम्, अब्रवीत् ।

व्याख्या—प्रह्लादः = हिरण्यकशिपुसूनुः, दैत्यराजः प्रसिद्धः । तु = अपि, "हे द्विजर्षभ ! = हे ब्राह्मणश्रेष्ठ !, त्रैलोक्यराज्यसक्तस्य = स्वर्गमर्त्यपाताललोकपालनतत्परस्य, (मे = मम,) क्षणः = समयः, अल्पोऽपीति शेषः । न = नहि, अस्ति = विद्यते, ततः = क्षणाभावात्, ते = तुभ्यम्, नोपदिशामि = ज्ञानं न कथयामि । उपदेशदाने तु शिक्षकस्य समयावश्यकता भवति, समयाभावात्कथमहं भवते उपदेशं दास्यामि । ( इति ) विप्रं = ब्राह्मणवेषधारिणम्, इन्द्रमिति भावः । अब्रवीत् = अवोचत् ।

समासादि—त्रैलोक्यस्य राज्यं त्रैलोक्यराज्यम्, तस्मिन् सक्त आसक्तस्त्रैलोक्यराज्यसक्तस्तस्य त्रैलोक्यराज्यसक्तस्य ।

---

( १ ) 'स तत्र' इति वा पाठः ( व्याख्या-तत्र=प्रह्लादस्थानगमनावसरे ) ।
( २ ) 'स्तुत्वा प्रोवाच' इति वा पाठः । ( व्याख्या—स्तुत्वा=स्तुतिं कृत्वा, प्रशंस्येति भावः ) ।
( ३ ) 'नास्ति द्विजोत्तम !' इति वा पाठः । ( व्याख्या-द्विजोत्तम != ब्राह्मणश्रेष्ठ ! ) ।

 

व्याकरणम्—अब्रवीत् = ब्रू + लङ् । अस्ति = अस् + लट् । उपदिशामि = उप + दिश् + लट् ।

वाच्यान्तरम्—प्रह्लादेनौच्यत, क्षणेन न भूयते, अतो नोपदिश्यते मया ।

कोषः—'अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः । तास्तु त्रिंशत् क्षणः' इत्यमरः ।

सारार्थः—त्रिभुवनराज्यपालनव्यग्रतया समयाभावादुपदेशदानेऽसमर्थोऽस्मि, इति प्रह्लाद इन्द्रमवदत् ।

भाषाऽर्थः—प्रह्लाद ने भी हे ब्राह्मण श्रेष्ठ ! 'मुझे तीनों लोकों के राज काज का भार रहने से फुरसत नहीं मिलती, इसलिये आप को मैं उपदेश नहीं दे सकता' ऐसा ब्राह्मण वेषधारी इन्द्र से कहा ॥ २९ ॥

**ब्राह्मणस्त्वब्रवीद्राजन् ! यस्मिन् काले क्षणो भवेत् ।**
**तदोपदेष्टुमिच्छामि (१)यदाचर्यमनुत्तमम् ॥ ३० ॥**

अन्वयः—तु, ब्राह्मणः, अब्रवीत्, 'यद्' हे राजन् !, यस्मिन्, काले, उपदेष्टुम्, क्षणः, भवेत्, तदा, अनुत्तमम्, आचर्यम्, यत्, 'तद्' इच्छामि ।

व्याख्या—तु = पुनः, ब्राह्मणः = विप्ररूपधारी इन्द्रः, अब्रवीत् = अवदत्, प्रह्लादं प्रतीति शेषः । 'यद्' हे राजन् ! = हेमहाराज प्रह्लाद !, यस्मिन् काले = यत्र समये, उपदेष्टुम् = उपदेशं दातुम्, भवतः । क्षणः = समयः, भवेत् = स्यात्, तदा = तदानीम्, अनुत्तमम् = सर्वश्रेष्ठम्, आचर्यम् = आचरणीयम्, आचरितुं योग्यमित्यर्थः । यद् = अनिर्दिष्टम्, अस्तीति शेषः । तद्' इच्छामि = ज्ञातुमभिलषामि, मम नायमभिप्रायोऽस्ति यत्स्वकार्यंपातं कृत्वा, मामुपदिश, किन्तु यदा तेऽवकाशो भवेत्, तदा कृपयाऽवश्यं कथयेदिति ।

समासादि—नोत्तमं विद्यते यतस्तदनुत्तमम् ।

व्याकरणम्—अब्रवीद् = ब्रू + लङ् । भवेत् = भू + विधिलिङ् । उपदेष्टुम् = उप + दिश् + तुमुन् । इच्छामि = इष् + लट् ।

वाच्यान्तरम्—ब्राह्मणेनौच्यत, क्षणेन भूयेत, मयाऽऽचर्यमिष्यते ।

सारार्थः—ब्राह्मणस्वरूपधारिणेन्द्रेणोक्तम्, यद् 'हे महाराज ! नाहं भवतः कार्यंपातं कृत्वा स्वार्थसाधनं कर्तुमिच्छामि, यदाऽवकाशो भवतो भवेत्तदैवाहं शिक्षणीयः ।

भाषाऽर्थः—फिर ब्राह्मण वेषधारी इन्द्र ने प्रह्लाद से कहा कि हे महाराज प्रह्लादजी ! जिस समय में 'आपको उपदेश देने के लिये समय मिले, उस समय में सबसे उत्तम आचरण योग्य जो हो उसे मैं जानना चाहता हूँ अर्थात्–उसे आप बतलावें ॥ ३० ॥

**ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः ।**
**तथेत्युक्त्वा (२)शुभे काले ज्ञानतत्त्वं ददौ तदा ॥ ३१ ॥**

अन्वयः—ततः, राजा, प्रह्लादः, ब्रह्मवादिनः 'उपरि' प्रीतः, अभवत्, तदा, तथा, 'अस्तु' इति, उक्त्वा, शुभे, काले, ज्ञानतत्त्वं, ददौ ।

व्याख्या—ततः = विप्ररूपिण इन्द्रस्य कथनश्रवणानन्तरम्, राजा = त्रैलोक्याधिपतिः, प्रह्लादः = एतन्नाम्ना विदितो दैत्यराजः । ब्रह्मवादिनः = ब्रह्म इत्येवं वदितुं शीलं यस्य तस्य ब्राह्मणस्येत्यर्थः । उपरि । प्रीतः = सन्तुष्टः, अभवत् = बभूव, तस्य धैर्यमवलोक्येति भावः । तदा = तस्मिन्नवसरे, तथा = अस्तु, बाढम् । इति = एवम्, उक्त्वा = उदीर्य, उच्चार्येत्यर्थः । शुभे =

---

(१) 'यदि कार्यान्तरं भवेत्' इति वा पाठः । (व्याख्या- यदि=चेत्; कार्यान्तरम्=नारब्धकर्मावसानं भवेत्=स्यात् ।

(२) 'ददौ काले ज्ञानतत्त्वं द्विजे तदा' इति वा पाठः । (व्याख्या- तदा=तस्मिन्, काले=समये, विप्ररूपधरस्येन्द्रस्योपरि सन्तोषावसरे, द्विजे=विप्रे, विप्रवेषधरायेन्द्रायेत्यर्थः । ज्ञानतत्त्वम्=श्रेयःसार, ददौ ) ।

अनध्यायरहिते, स्वाध्यायोचित इत्यर्थः। काले = समये, ज्ञानतत्त्वम् = सूक्ष्मज्ञानम् , ज्ञानबीजमित्यर्थः । ददौ = दत्तवान् , विप्ररूपिण इन्द्राय दिव्यं ज्ञानं ददावित्यर्थः ।

समासादि—ब्रह्म ब्रह्मतत्त्वं वदितुं शीलमस्येति ब्रह्मवादी, तस्य ब्रह्मवादिनः । ज्ञानस्य तत्त्वम् , निदानरूपमिति ज्ञानतत्त्वम् ।

वाच्यान्तरम्—राज्ञा प्रीतेनाभूयत, तेन ज्ञानतत्त्वं ददे ।

सारार्थः—विप्रवेषवतो देवेन्द्रस्य सन्तोषकरणं ज्ञात्वाऽतीवसन्तुष्टो दैत्यराजः प्रह्लादः, अहमवश्यं ज्ञानं दास्यामीति तमुक्त्वा शुभावसरे तस्मै ज्ञानतत्त्वं दत्तवान् ।

भाषाऽर्थः—उसके बाद राजा प्रह्लाद ने उस ब्राह्मण के रूप में रहने वाले इन्द्र के ऊपर प्रसन्न हुये और जैसा आप कहते हैं वैसा ही होवै ऐसा कहकर ( मौका पाने पर ) अच्छे मुहूर्त में उनको ज्ञान के सारांश का उपदेश दिया ॥ ३१ ॥

**ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।**
**चकार सर्वभावेन (१)यदस्य मनसेप्सितम् ॥ ३२ ॥**

अन्वयः--ब्राह्मणः, अपि, यथान्यायम् , अनुत्तमाम्, गुरुवृत्तिं, चकार, ( तथा ) अस्य, मनसा, यद् , ईप्सितम् , (तदपि) सर्वभावेन, चकार ।

व्याख्या--ब्राह्मणः = विप्रवेषधारी, इन्द्रः । अपि = निश्चयेन, यथान्यायम् = यथोचितम् , अनुत्तमाम् = महोत्कृष्टाम् , गुरुवृत्तिम् = गुरुशुश्रूषाम् , चकार = कृतवान् , शिक्षाऽर्थिन उचिता मन्वादिस्मृतिग्रन्थे यथा वृत्तिरुदिता तथेति भावः । ( तथा ) अस्य = दैत्यराजस्य, प्रह्लादस्य । मनसा = मानसेन, यद् = यत् किञ्चिद् , ईप्सितम् = इष्टम् , मनोरथ इत्यर्थः । ( तत् सर्वमपि ) सर्वभावेन = कायचित्तवचनश्रमेण, चकार = कृतवान् ।

समासादि--गुरोर्वृत्तिः शुश्रूषारूपेति गुरुवृत्तिस्तां गुरुवृत्तिम् । न विद्यत उत्तमा यस्याः साऽनुत्तमा तामनुत्तमाम् । सर्वस्य भावः सर्वभावस्तेन सर्वभावेन ।

व्याकरणम्—चकार = कृ + लिट् । ईप्सितम् = आप् + सन् + क्तः ।

वाच्यान्तरम्--ब्राह्मणेनाऽपि गुरुवृत्तिश्चक्रे ।

सारार्थः--विप्रवेषधर इन्द्रोऽपि शास्त्रोक्तरीत्या गुरुरूपस्य प्रह्लादस्य कायेन मनसा वाचा कर्मणा सेवापूर्वकं मनोरथसिद्धिं च कृतवान् ।

भाषाऽर्थः—ब्राह्मणवेषधारी इन्द्र ने भी नियमानुसार ( प्रह्लाद की ) अच्छी तरह से गुरुसेवा की, और उनके मन के जो २ अभीष्ट थे वे २ भी हर एक तरह से पूरा किये ॥ ३२ ॥

**पृष्टश्च तेन बहुशः प्राप्तं(२) कथमनुत्तमम् ।**
**त्रैलोक्यराज्यं धर्मज्ञ ! कारणं तद् ब्रवीहि मे ॥ ३३ ॥**

अन्वयः—हे धर्मज्ञ !, कथम्, अनुत्तमम्, त्रैलोक्यराज्यम्, प्राप्तम्, तत्, कारणम्, मे, ब्रवीहि, ( इति ) तेन, च, बहुशः, पृष्टः ।

व्याख्या—हे धर्मज्ञ ! = हे धर्मवेत्तः !, कथम् = केनोपायेन, अनुत्तमम् = अत्युत्कृष्टम् , त्रैलोक्यराज्यम् = भुवनत्रयसाम्राज्यम्, प्राप्तम् = लब्धम्, तद् = अनिर्दिष्टम् , कारणम् = हेतुम्, मे = मह्यं, विप्रायेत्यर्थः । ब्रवीहि = कथय, ( इति ) तेन = इन्द्रेण, च = अपि, बहुशः = वारंवारम्, पृष्टः = अनुयुक्तः, मां कथय मां कथयेत्येवमाग्रहेणोक्तः ।

समासादि—त्रैलोक्यस्य राज्यं त्रैलोक्यराज्यम् । धर्मं जानातीति धर्मज्ञस्तत्सम्बुद्धौ हे धर्मज्ञ ! ।

---

( १ ) 'यद्यच्च मनसेच्छति' इति वा पाठः । (व्याख्या—मनसा=चित्तेन, यद् यद् , इच्छति=अभिलषति, तत्तादित्यर्थः ) ।

( २ ) 'कथम'रिन्दम !' इति वा पाठः । ( व्याख्या-अरिन्दम ! =रिपुसूदन ! ) ।

व्याकरणम्—पृष्टः = प्रच्छ् + क्तः । प्राप्तम् = प्र + आप् + क्तः । ब्रवीहि = ब्रू + लोट् । आर्षोऽयं प्रयोगः, व्याकरणतो ब्रूहीत्यस्यैव साधुत्वात् ।

वाच्यान्तरम्—कारणं त्वयोच्यताम् ।

कोषः—'हेतुर्ना कारणं बीजं निदानन्त्वादिकारणम्' इत्यमरः ।

सारार्थः—कथं भवता भुवनत्रयसाम्राज्यमधिगतं तत्कारणं कृपया कथय कथयेति वारं-वारं कपटविप्रवेषधारिणा देवनाथेन प्रह्लादः पृष्टः ।

भाषाऽर्थः—हे धर्म के जानने वाले प्रह्लादजी ! आप ने कैसे सर्वश्रेष्ठ ( दुर्लभ ) त्रैलोक्य राज्य पाया, इसका कारण मुझे बताइये, ऐसा उन इन्द्रने बार बार प्रह्लाद से पूछा ॥ ३३ ॥

प्रह्लादोऽपि महाराज ! ब्राह्मणं वाक्यमब्रवीत् ।
नासूयामि द्विजान् विप्र ! राजाऽस्मीति(१) कदा चन ॥
(२)वाक्यानि वदतां तेषां संयच्छामि वहामि च ॥ ३४ ॥

अन्वयः—महाराज !, प्रह्लादः, अपि, ब्राह्मणम् , वाक्यम्, अब्रवीत्, (यद्) हे विप्र !, कदा चन, ( अहं ) राजा, अस्मि, इति, द्विजान्, न, असूयामि, वदतां, तेषां, वाक्यानि, संयच्छामि, वहामि, च ।

व्याख्या—धृतराष्ट्रः स्वात्मजं दुर्योधनं प्रति, तथा भीष्मोऽपि युधिष्ठिरं प्रति वदति यद् । हे महाराज ! = हे नृपतिशिरोमणे !, प्रह्लादः = दैत्यराजः, प्रसिद्धविष्णुभक्त इत्यर्थः । अपि = च, ब्राह्मणम् = विप्रवेषधरमिन्द्रम्, प्रति । वाक्यम् = वचनम्, वक्ष्यमाणरूपमित्यर्थः। अब्रवीत् = उक्तवान्, यद् । हे विप्र ! = हे ब्राह्मण !, कदा चन = कस्मिन्नपि समये, (अहं) राजा = नृपतिः, आदेशकारकः, शासकश्च, यूयमाज्ञापालका दण्डयाश्च । इति = एवम्, द्विजान् = ब्राह्मणान्, न = नहि, असूयामि = सदोषान् करोमि, वदताम् = उपदिशताम्, तेषाम् = ब्राह्मणानाम्, वाक्यानि = वचनानि, संयच्छामि = गृह्णामि, वहामि च = धारयाम्यपि, मनसेति शेषः । तेषामुपर्य्यतीव भक्तिर्विद्यत इत्यर्थः ।

समासादि—महाँश्चासौ राजा महाराजस्तत्सम्बुद्धौ हे महाराज ! ।

व्याकरणम्—अब्रवीत् = ब्रू + लङ् । असूयामि = नामधातोर्णिच् + लट् । अस्मि = अस् + लट् । संयच्छामि = सम् + यम् + लट् । वहामि = वह् + लट् ।

वाच्यान्तरम्—प्रह्लादेन वाक्यमोच्यत, मया न द्विजा असूयन्ते, तेषां वाक्यानि संयम्यन्ते-उह्यन्ते च ।

सारार्थः—प्रह्लादो विप्रवेषवन्तमिन्द्रं प्रत्युवाच यद् 'हे विप्र ! सदाऽहं ब्राह्मणान् संमानयामि, न कदाऽपि, तेषां जातेऽप्यपराधे दोषोद्घाटनं करोमि, तथा तेषां निन्दां च न करोमि, तैर्यदुच्यते, तच्छिरसा गृह्णामि ।

भाषाऽर्थः—हे महाराज! (तब) प्रह्लाद ने ब्राह्मण भेषधारी इन्द्र से कहा कि 'हे ब्राह्मण ! कभी भी मैं राजा हूं, यह समझ कर ब्राह्मणों के गुणों में दोषों का आरोपण नहीं करता हूं, और कहते हुये उन लोगोंके उपदेशवाक्यों को ग्रहण करता हूं, तथा पालन किया करता हूं ॥ ३४ ॥

ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
(३)ते मां काव्यपथे युक्तं शुश्रूषुमनसूयकम् ॥ ३५ ॥

---

( १ ) 'कथं च न' इति वा पाठः । ( व्याख्या—कथं च न = केनापि विधिना नहि ) ।

( २ )'काम्यानि' इति वा पाठः । ( व्याख्या—काम्यानि = कमनीयानि, सुकोमलानि ) ।

( ३ ) 'तेषां कार्यपथे युक्तं शुश्रूषुमनहङ्कृतम्' इति वा पाठः । ( व्याख्या—तेषां = विप्राणां, कार्यपथे = कृत्यवर्त्मनि, युक्तं = संलग्नम् , शुश्रूषुम् = सेवकम् , अनहङ्कृतम् = विनयवन्तम् , अनुद्धतमित्यर्थः ।

धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिञ्चन्ति(१)शास्तारः क्षौद्रं मध्विव माक्षिकाः ॥ ३६ ॥

अन्वयः--ते, विस्रब्धाः, प्रभाषन्ते, सदा, मां, संयच्छन्ति, च, शास्तारः, काव्यपथे, युक्तम्, शुश्रूषुम्, अनसूयकम्, धर्मात्मानम्, जितक्रोधम्, नियतं, संयतेन्द्रियम्, माम्, माक्षिकाः, क्षौद्रं, मधु, इव, समासिञ्चन्ति ।

व्याख्या--ते = द्विजाः, ब्राह्मणा इत्यर्थः । विस्रब्धाः = विश्वस्ताः, भूत्वा । प्रभाषन्ते = प्रवदन्ति, अवश्यमेव मद्वचनं प्रह्लादो मन्यत इति प्रतीता ब्राह्मणा मामुपदिशन्ति, नहि भयात्सङ्कोचमाचरन्ति, तथा सति मनोदुःखसंभवात् । तथा । सदा = नित्यम्, मां = प्रह्लादम्, संयच्छन्ति = यथा कुमार्गं प्रस्थितान् वाजिनो यन्ता नियच्छति, तथा कामक्रोधाहङ्करादिकुमार्गगतं मां संनियच्छन्ति । च = अपि, ते = पूर्वोक्ताः, ब्राह्मणा इत्यर्थः । शास्तारः = उपदेष्टारः, उपदेशका इत्यर्थः । काव्यपथे = शुक्रोपदिष्टनीतिमार्गे, युक्तम् = संलग्नम्, शुश्रूषुं = सेवकम्, अनसूयकम् = प्रशंसकम्, अनिन्दकं वा । धर्मात्मानम् = धर्मनिरतम्, जितक्रोधम् = वशीकृतकोपम्, शान्तचेतसमित्यर्थः । नियतम् = ध्रुवम्, संयतेन्द्रियम् = वशीकृतहृषीकम्, माम् = प्रह्लादम्, माक्षिकाः = मधुमक्षिकाः, क्षौद्रं = मधु, इव = यथा, समासिञ्चन्ति = प्रसिञ्चन्ति, यथा मक्षिकाः स्वमधुनीडं सततं नवनवपुष्परससेकेन मधुमयं कुर्वन्ति, तथैव ब्राह्मणा अपि मां सदा सदुपदेशेन शान्तं गुणनिलयं कुर्वन्तीति भावः ।

समासादि--काव्यस्य शुक्रस्य पन्था इति काव्यपथस्तस्मिन् काव्यपथे । न असूया विद्यते यस्य सोऽनसूयकस्तमनसूयकम् । धर्मे आत्मा यस्य स धर्मात्मा, तं धर्मात्मानम् । जितः क्रोधो येनासौ जितक्रोधस्तम् । संयतानि नियन्त्रितानीन्द्रियाणि येन स संयतेन्द्रियस्तं संयतेन्द्रियम् ।

व्याकरणम्--प्रभाषन्ते = प्र + भाष् + लट् । संयच्छन्ति = सम् + यम् + लट् । समासिञ्चन्ति = सम + आङ् + षिच् + लट् ।

वाच्यान्तरम्--तैर्विश्रब्धैः प्रभाष्यते, अहं तैः संयम्ये, तैश्चाहं समासिच्ये ।

कोषः--'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः' इत्यमरः । 'हृषीकं विषयीन्द्रियम्' इति चाप्यमरः ।

सारार्थः--अस्मच्चित्तसरलतां विदित्वा विश्वस्ता ब्राह्मणाः सर्वदैव मह्यं हितमुपदिशन्ति, तथाऽहमपि सर्वथा तेषां सेवायां वचनपालने च निरतो वर्त्ते ।

भाषाऽर्थः--वे ब्राह्मण सब मेरे पर विश्वास रखकर यथाऽर्थ कथा का उपदेश करते हैं, और सदा मुझे बुरे कामों से रोकते हैं, तथा वे उपदेश देने वाले ब्राह्मण लोग शुक्राचार्य के बताये हुये नीति मार्ग में लगे हुए, सेवा में निरत, असूया ( निंदा ) न करने वाले, धर्मात्मा, शांतचित्त, निश्चय करके इंद्रियों को वशमें रखनेवाले, मुझे, नये नये मीठे मीठे उपदेशों से सन्तुष्ट करते रहते हैं, जैसे मधुमक्षिका सतत चारो ओर से फूलोंके रस लाकर अपने छत्तेको सींचती है, वैसे ही ॥ ३९ ॥ ३६ ॥

सोऽहं वागग्रविद्यानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३७ ॥

अन्वयः—वागग्रविद्यानां, रसानाम्, अवलेहिता, सः, अहम्, चन्द्रमाः, नक्षत्राणि, इव, स्वजात्यान्, अधितिष्ठामि ।

व्याख्या—वागग्रविद्यानाम् = जिह्वाऽग्रेविद्यमानविद्यावताम्, अभ्यस्तसकलशास्त्राणां ब्राह्मणानामित्यर्थः । रसानाम् = उपदेशामृतरसानाम्, अवलेहिता = आस्वादयिता, सः =

(१) 'शास्त्रज्ञाः' इति वा पाठः । ( व्याख्या—शास्त्रज्ञाः=आगमज्ञातारः ) ।

प्रसिद्धः । अहम् = प्रह्लादः, चन्द्रमाः = नक्षत्रनायकश्चन्द्रः, नक्षत्राणि = ताराः, इव = यथा, अर्थाद्-यथा चन्द्रः सकललघुतेजस्विनां नक्षत्राणां मध्ये प्रभावशाली वर्तते, तथैवाहमपि । स्वजात्यान् = दैतेयान्, दानवानित्यर्थः । अधितिष्ठामि = अधिवर्त्ते, स्वजातीयेषु प्रधानोऽस्मीति भावः ।

समासादि—वागग्रे जिह्वाऽग्रे विद्या विद्यन्ते येषां ते वागग्रविद्यास्तेषां वागग्रविद्यानाम् । जातौ भवा जात्याः, स्वस्य जात्याः स्वजात्यास्तान् स्वजात्यान् ।

व्याकरणम्—अवलेहिता = अव + लिह् + तृच् । अधितिष्ठामि = अधि + ष्ठा + लट् ।

वाच्यान्तरम्—मया स्वजात्या अधिष्ठीयन्ते ।

कोषः—'नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्' इत्यमरः ।

'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः' इत्यमरः ।

सारार्थः—ब्राह्मणमुखनिःसृतामृतमास्वादयन्नहं यथा नक्षत्राणां मध्ये चन्द्रः प्रधानतया वर्तते, तथैव स्वजातिवर्गेषु प्रधानरूपोऽस्मीति ।

भाषाऽर्थः—जिन्हों के जिह्वा के अग्रभाग में सारी विद्यायें हैं ऐसे ब्राह्मणों के अमृतरूप उपदेशों का आस्वादन करने वाला प्रसिद्ध मैं प्रह्लाद, ताराओं में जैसे चन्द्रमा प्रधान रूपसे है, वैसे ही अपने जात पात में मुख्य ( मुखिया ) रूपसे हूँ ॥ ३७ ॥

**एतत् पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।**
**यद् ब्राह्मणमुखे (१)वाक्यमेतच्छ्रुत्वा प्रवर्तते ॥ ३८ ॥**

अन्वयः—ब्राह्मणमुखे, यद्, वाक्यम्, 'तद्' एतत, पृथिव्याम्, अमृतम्, एतद्, अनुत्तमम्, चक्षुः, एतद्, श्रुत्वा, 'जनः' प्रवर्त्तते ।

व्याख्या—ब्राह्मणमुखे = द्विजवदने, यद् = अनिर्दिष्टं, वाक्यम्, = सुप्तिङन्तचयरूपम्, ब्राह्मणमुखनिःसृतं वचनमित्यर्थः । 'तत्' एतद् = इदम्, पृथिव्याम् = भूलोके, अमृतम् = सुधारसोपमम्, अर्थाद्-विप्रवाक्यानुसारं ये चलन्ति संसारयात्रायां, ते कीर्त्तिशालिनः सदैवामरा इव जीवन्ति, 'कीर्त्तिर्यस्य स जीवती' त्युक्तत्वात् । तथा च । एतद् = विप्रवचः, अनुत्तमम् = अत्युत्कृष्टं, दिव्यमित्यर्थः । चक्षुः = नेत्रम्, अस्तीति शेषः । ब्राह्मणकथोपदिष्टमार्गे व्रजन्तः प्रलयेऽपि न नरके पतन्ति, अत उक्तं युक्तियुक्तम् । एतद् = विप्रवचः, श्रुत्वा = आकर्ण्य, ( जनः ) प्रवर्त्तते = प्रचलति, अधुनाऽपि करालकलिकाले विप्रमुखनिःसृतग्रन्थानुसारमेव भाषाऽन्तरे धर्मशास्त्रादिशासनपद्धतिर्वर्त्तते, वस्तुतो 'ब्राह्मणस्य मुखेऽमृतेऽमृतं जु ोमि स्वाहे'ति श्रुतिरपि तन्मतं द्रढयति ।

समासादि—ब्राह्मणस्य मुखं ब्राह्मणमुखं, तस्मिन् ब्राह्मणमुखे ।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा । प्रवर्त्तते = प्र + वृत् + लट् ।

वाच्यान्तरम्—जनैः प्रवृत्यते ।

कोषः—'पीयूषममृतं सुधा' इत्यमरः । 'नेत्रं दृङ् नयनं चक्षुर्दृष्टिर्लोचनमित्यपि' इति कोशान्तरम् ।

सारार्थः—ब्राह्मणस्य वचनमेवामृतं, दिव्यं चक्षुरपि, तद्शादेवाधुनाऽपि जगच्चलति, तेन कल्याणाकाङ्क्षिभिर्विप्रवचो ग्राह्यम् ।

भाषाऽर्थः—ब्राह्मण के मुख में (ब्राह्मण के मुख से निकला हुआ) जो वचन है, (वही) यह भूलोक (संसार) में अमृत है अर्थात्-ब्राह्मणों के कथनानुसार जो चलते हैं, वेही कीर्त्तिशाली होते हुये सदा देवताओं की भांति अमर रहते हैं, क्यों कि—कहा भी है कि "जिसकी

( १ ) 'हव्यमेतच्छ्रुत्वा' इति वा पाठः । ( व्याख्या-हव्यम्=होमीयम्, भोज्यमित्यर्थः ) ।

कीर्त्ति है (वही) जीवित है, वही यह सर्वश्रेष्ठ ( दिव्य ) नेत्र है और इसी को सुनकर लोग चलते हैं ।। ३८ ॥

एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
तदा शुश्रूषितस्तेन दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३९ ॥

अन्वयः—प्रह्लादः, 'एतावद्, श्रेयः' इति, ब्रह्मवादिनम्, आह, तदा, तेन, शुश्रूषितः, दैत्येन्द्रः, वाक्यम्, अब्रवीत् ।

व्याख्या—प्रह्लादः = बलिदैत्यजनकः, एतावद् = विप्रवचः, ( एव ) श्रेयः = कल्याणम्, इति = इदम्, ब्रह्मवादिनम् = ब्राह्मणवेषधरमिन्द्रम्, ( प्रति ) आह = उवाच । तदा = तस्मिन्नवसरे, तेन = विप्ररूपधरेणेन्द्रेण, शुश्रूषितः = सेवितः, दैत्येन्द्रः = दानवाधिपतिः, वाक्यम् = वचनम्, अब्रवीत् = अवदत् ।

समासादि--दैत्येष्विन्द्रो दैत्येन्द्रः ।

व्याकरणम्--आह = ब्रू + लट् । शुश्रूषितः = श्रु + सन् + क्तः । अब्रवीत् = ब्रू + लङ् ।

वाच्यान्तरम्--प्रह्लादेन ब्रह्मवादी ऊचे, इन्द्रेण शुश्रूषितेन दैत्येन्द्रेण वाक्यमोच्यत ।

सारार्थः--विप्रवच एवामृतमित्युक्तस्य प्रह्लादस्य यथाविधि सेवां कुर्वन्तमिन्द्रं प्रति स च वाक्यमुवाच ।

भाषाऽर्थः--प्रह्लाद ने इतने ही कल्याणकर विषय हैं, ऐसा ब्राह्मण वेषधारी इन्द्र से कहा, तब इन्द्र से सेवित हुये अर्थात् ( इन्द्र की सेवा से प्रसन्न हुये ) दैत्यों के राजा प्रह्लाद ने ( ब्राह्मण से आगे कही जाने वाली बात ) कहा ।। ३९ ॥

यथावद् गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ! ।
वरं वृणीष्व भद्रं ते प्रदाताऽस्मि न संशयः ॥ ४० ॥

अन्वयः--हे द्विजसत्तम !, ते, यथावद्, गुरुवृत्त्या, प्रीतः, अस्मि, वरं, वृणीष्व, ते, भद्रं, प्रदाता, अस्मि, 'अत्र' संशयः, न, 'अस्ति' ।

व्याख्या--हे द्विजसत्तम ! = हे विप्रवर !, ते = तव, यथावद् = यथोचितं, धर्मशास्त्रानुसारम् । गुरुवृत्त्या = गुरुशुश्रूषया, प्रीतः = हर्षितः, अस्मि = भवामि, (तेन त्वम्) वरम् = ईप्सितं वस्तु, वृणीष्व = प्रार्थयस्व, ते = तव, भद्रम् = कल्याणम्, श्वःश्रेयसमित्यर्थः । प्रदाताऽस्मि = दानायोद्यतो भवामि, इत्यत्र । संशयः = सन्देहः, न = नहि, अस्ति ।

समासादि--गुरोर्वृत्तिर्गुरुवृत्तिस्तया गुरुवृत्त्या । द्विजेषु सत्तमो द्विजसत्तमस्तत्सम्बोधने हे द्विजसत्तम ! ।

व्याकरणम्—अस्मि = अस् + लट् । वृणीष्व = वृ + लोट् । अस्मि = अस् + लट् ।

वाच्यान्तरम्—प्रीतेन मया भूयते । त्वया वरो व्रियताम्, प्रदात्रा मया भूयते ।

कोषः--'प्रीतः प्रसन्नो मुदितो हर्षितो हृष्टमानसः' इति कोशान्तरम् ।
'यथाविधि यथान्यायं यथोक्तं च यथोचितम्' इति कोषान्तरम् ।
'ईप्सितं वरमिष्टं च' इति कोशः ।

सारार्थः--प्रह्लादो विप्ररूपिणमिन्द्रमुवाच यद् 'हे ब्राह्मणश्रेष्ठ ! तव शुश्रूषया सर्वथा प्रसन्नोऽस्मि, तेन तुभ्यं ध्रुवं वरं दास्यामि, त्वं वरं प्रार्थयस्वेति ।

भाषाऽर्थः--हे ब्राह्मणों में श्रेष्ठ ! तुम्हारी यथोचित गुरु सेवा से मैं प्रसन्न हूं, ( इससे तुम ) वर मांगो, ( मैं ) तुम्हारा ( जिससे ) कल्याण हो ( उस ) वरका देने वाला हूं, इसमें सन्देह नहीं है ।। ४० ॥

कृतमित्येव दैत्येन्द्रमुवाच(१)स च वै द्विजः ।
प्रह्लादस्त्वब्रवीत् प्रीतो गृह्यतां वर इत्युत ॥ ४१ ॥

अन्वयः--वै, सः, च, द्विजः, कृतम्, इति, एव, दैत्येन्द्रम्, उवाच, उत, 'ततः' प्रीतः, प्रह्लादः, तु, वरः, गृह्यताम्, इति, अब्रवीत् ।

व्याख्या--वै = निश्चयेन, स च = पूर्वोक्तोऽपि, द्विजः = ब्राह्मणः, कृतम् = अलम्, अन्यवरेण व्यर्थम्, केवलं शीलमेव ज्ञातुमिच्छामि । इत्येव = एतदेव । दैत्येन्द्रम् = प्रह्लादम्, उवाच, = अब्रवीत् । उत = च, 'ततस्तच्छ्रुत्वा' प्रीतः = प्रसन्नः, प्रह्लादः = हिरण्यकशिपुसुतः, तु = अपि, वरः = ईप्सितं वस्तु, गृह्यताम् = स्वीक्रियताम्, इति = एतद्, ब्राह्मणम् । अब्रवीत् = अवदत्

समासादि—दैत्येष्विन्द्रो दैत्येन्द्रस्तत्सम्बुद्धौ हे दैत्येन्द्र ! ।

व्याकरणम्--उवाच = ब्रू + लिट् । अब्रवीत = ब्रू + लङ् । गृह्यताम् = ग्रह् + कर्मणि लोट् ।

वाच्यान्तरम्--द्विजेन दैत्येन्द्र ऊचे प्रीतेन प्रह्लादेन वरं (त्वं) गृहाणेत्योच्यत ।

सारार्थः--वरान्तरस्य प्रयोजनं मे नास्ति, केवलं शीलमेवेच्छामि, एवं ब्राह्मणेनोक्तो दैत्यराजः प्रह्लादः, पुनर्ब्राह्मणं प्रति वरो गृह्यतामित्युवाच ।

भाषाऽर्थः--फिर उस ब्राह्मण ने "और वर फजूल है" यही दैत्यों के अधिपति से कहा, और ( उसके बाद ) प्रसन्न होते हुये प्रह्लाद ने भी 'जो चाहो सो वर (मुझसे) लो' ऐसा ब्राह्मण वेषधारी इन्द्र से कहा ।। ४१ ।।

ब्राह्मण उवाच । ( ब्राह्मण बोले ) ।

यदि राजन् ! प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४२ ॥

अन्वयः--हे राजन् !, त्वं, यदि, प्रसन्नः 'असि' । चेद्, मम, प्रियम्, इच्छसि, 'तदा' भवतः, शीलं, प्राप्तुम्, इच्छामि, एष, मम, वरः, 'अस्ति' ।

व्याख्या--हे राजन् ! = हे त्रैलोक्यपालक !, त्वं = प्रह्लादः, यदि = चेद्, 'ममोपरि' प्रसन्नः = हर्षितः, सन्तुष्ट इति भावः । (असि, तथा) चेद् = यदि, वस्तुतः । मम = विप्रस्य, प्रियम् = अभीष्टम्, 'कर्त्तुम्' इच्छसि = अभिलषसि, (तदा, ममाभीष्टं श्रूयताम्, अहम्) भवतः = त्वत्तः, प्रह्लादतः । शीलम् = सौजन्यम्, प्राप्तुम् = लब्धुम्, इच्छामि = अभिलषामि । एषः = अयम्, ईदृगेव । मम = विप्रस्य, वरः = कामः, मनोरथो वा मनोगतो भाव इत्यऽर्थः । अस्ति ।

व्याकरणम्--इच्छसि = इष् + लट् । इच्छामि = इष् + लट् । प्राप्तुम् = + प्र + आप् + तुमुन् ।

वाच्यान्तरम्--त्वया मम प्रियमिष्यते, मया भवतः शीलं प्राप्तुमिष्यते ।

सारार्थः--प्रह्लादस्य वचनं श्रुत्वा ब्राह्मणोऽवदत्, हे राजन् ! यदि सत्यमेव ममोपरि भवान् प्रसन्नो भूत्वा वरं दातुमिच्छति, तदा शीलं कथय, इयमेव वरप्रार्थना मदीयेति ।

भाषाऽर्थः--हे महाराज ! आप अगर प्रसन्न ( खुश ) हैं और यदि मेरा प्रिय (करना) चाहते हैं, तो मैं आप से शील ( शील के लक्षण ) प्राप्त करने की इच्छा रखता हूं, यही मेरा अभीष्ट है ॥ ४२ ॥

ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत् ।
वरं प्रदिष्टं विप्रेण (२)नाल्पतेजाऽयमित्युत ॥ ४३ ॥

---

( १ ) 'द्विजसत्तमः' इति वा पाठः । ( व्याख्या–द्विजसत्तमः=ब्राह्मणश्रेष्ठः, विप्रवेषधारी इन्द्र इत्यर्थः । )

( २ )' नाल्पचेताऽयमि'ति वा पाठः । ( व्याख्या—अयम्=विप्रः, अल्पचेताः =स्वल्पमतिः, न=नहि, अस्तीति शेषः ) ।

अन्वयः--ततः, विप्रेण, वरे, प्रदिष्टे, दैत्येन्द्रः, तु, प्रीतः, 'अभवत्' उत, अयम्, अल्पतेजाः, न, 'अस्ति' इति, अस्य, महद्, भयम्, अभवत् ।

व्याख्या--ततः = वरप्रार्थनाश्रवणानन्तरम्, विप्रेण = विप्ररूपधरेणेन्द्रेण, वरे = स्वज्ञेयविषये, प्रदिष्टे = प्रतिपादिते, (सति) दैत्येन्द्रः = प्रह्लादः, प्रीतः = प्रसन्नः, जातः । तु = किन्तु, उत = वितर्के, अयम् = वरप्रार्थको जनः, अल्पतेजाः = तेजोहीनः, सामान्यम् । न = नहि, अस्ति । अर्थाद्-महाप्रभावशाली अतिप्रतिभावान् वाऽस्ति । इति = अदः, अस्य = प्रह्लादस्य, मनसि । महत् = परमम्, भयम् = शङ्काऽऽत्मकम्, अभवत् = जातम् । वरार्थनमाकर्ण्य तस्यादूभुतं विचारं, धनादिभिन्नं ज्ञात्वाऽसाधारणोऽयं जन इति प्रह्लादस्य मानसे शङ्का जातेति भावः ।

समासादि--अल्पं तेजो यस्य सोऽल्पतेजाः ।

व्याकरणम्--अभवत् = भू + लङ् । अल्पतेजाऽयमित्यत्र सन्धिरार्षः ।

वाच्यान्तरम्--अस्य महता भयेनाभूयत ।

सारार्थः—ब्राह्मणस्य वरार्थनं निशम्य प्रह्लादः प्रसन्नोऽभूत् पश्चात्तस्यालौकिकीं प्रतिभां च विज्ञाय शङ्कितोऽपि जातः ।

भाषाऽर्थः--उसके वाद ब्राह्मण के वर मांगने पर (वर को सुन) दैत्यों में प्रधान प्रह्लाद प्रसन्न हुए किन्तु 'यह ब्राह्मण कोई साधारण तेजस्वी नहीं है' इससे उन्हे बड़ा भारी भय भी हुआ ॥ ४३ ॥

एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ४४ ॥

अन्वयः—तदा, विस्मितः, सः, प्रह्लादः, एवम्, अस्तु, इति, प्राह, तु, विप्राय, वरम्, उपाकृत्य, दुःखान्वितः, अभवत् ।

व्याख्या—तदा = शङ्काऽवसरे, विस्मितः = चकितः, भयभीत इत्यर्थः । सः = पूर्वोक्तः, प्रह्लादः = दैत्यराजः, (अगत्या) एवम् = त्वदुक्त्यनुसारमेव, अस्तु = भवतु, इति = एतत्, प्राह = वदति, तु = किन्तु, विप्राय = भूसुराय, ब्राह्मणवेषवत इन्द्रायेत्यर्थः । वरम् = इष्टम्, उपाकृत्य = समर्प्य, दुःखान्वितः = परितापपीडितः, अभवत् = बभूव, जात इति भावः ।

समासादि—दुःखेनान्वितो दुःखान्वितः ।

व्याकरणम्—अस्तु = अस् + लोट् । प्राह + प्र + ब्रू + लट्, आहादेशः । विस्मितः = वि + स्मिङ् + क्तः । उपाकृत्य = उप् + आङ् + कृ + ल्यप् । अभवत् = भू + लङ् ।

वाच्यान्तरम्—तेन प्रोच्यते, दुःखान्वितेनाभूयत ।

सारार्थः—'तथाऽस्तु' इत्युक्त्वा प्रह्लादो विप्रस्यालौकिकीं प्रतिभां विलोक्य 'कोऽयमि'ति शङ्कितः, तस्मै विप्राय वरं दत्वा क्षणं कर्त्तव्यविमूढो जातः ।

भाषाऽर्थः—उसके वाद चकित हुये उन प्रह्लाद ने (हार कर अन्त में) 'ऐसा (जैसा तुम कहते हो उसके अनुसार ही) होवै' यह कहा, किन्तु ब्राह्मण वेषधारी इन्द्र को वर देकर दुःखी हुये ॥ ४४ ॥

दत्ते वरे गते विप्रे चिन्ताऽऽसीन्महती तदा ।
प्रह्लादस्य महाराज ! निश्चयं न च जग्मिवान् ॥ ४५ ॥

अन्वयः—हे महाराज !, वरे, दत्ते, 'सति' विप्रे, गते, 'सति' तदा, प्रह्लादस्य, महती, चिन्ता, आसीत्, 'तथा' निश्चयं, न, च, जग्मिवान् ।

व्याख्या—हे महाराज ! = हे नृपतिशिरोमणे !, दुर्योधन ! । धृतराष्ट्रस्योक्तिरियम् । वरे = अभीष्टे, श्रेयःसाधनरूप इत्यर्थः । दत्ते = अर्पिते (सति ततश्च) विप्रे = ब्राह्मणवेषधरे, इन्द्रे । गते = याते, (सति) तदा = तस्मिन्नवसरे, प्रह्लादस्य = एतन्नामकदैत्यविशेषस्य, (हृदये) महती = परमा, चिन्ता = आधिरूपा, आसीद् = बभूव, कोऽयं परमप्रतिभावान् जनः ?

कुत आयातः? इति, प्रायोऽयं देवराजः किम्? चेत् स एव भवेत्तदाऽस्मन्मुलं तेन गृहीतम्, यद् बलादहं त्रैलोक्येश्वरो जातः, तत्कोऽयमासीद्? इति महती चिन्ताऽभूत्। (तथा प्रह्लादः) निश्चयम्=निर्णयं, न जग्मिवान्=नहि जगाम, निश्चितरूपेण तं न ज्ञातवानिति यावद्।

समासादि—जगामेति जग्मिवान्।

व्याकरणम्—आसीत्=अस्+लङ्। जग्मिवान्=गम्+क्वसुः।

वाच्यान्तरम्—महत्या चिन्तयाऽभूयत, तेन निश्चयो न जग्मे।

कोषः—'वरः पूर्णाभिलाषे तु' इति कोषः।

'स्याच्चिन्ता स्मृतिराध्यानम्' इत्यमरः।

'सन्देहद्वापरौ चाथ समौ निर्णयनिश्चयौ' इत्यमरः।

सारार्थः—यदा विप्रवेषधरायेन्द्राय प्रह्लादो वरं दत्तवान्, स च विप्रो वरमादाय गतवान्, तदा एकाकिदशायां तस्य प्रह्लादस्यातुला चिन्ताऽभूत्, तथा च परितो ज्ञानचक्षुषि प्रसारितेऽपि निश्चयो न जात इति।

भाषाऽर्थः—हे महाराज दुर्योधन! वर देने के बाद, ब्राह्मण के चले जाने पर, प्रह्लाद के (दिल में) भारी फिकिर आगयी, और (विचारते विचारते भी) उस समय कुछ निश्चय न कर सके (कि यह कौन था?)॥ ४५॥

तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति।
तेजो विग्रहवत्तात! शरीरमजहात्तदा॥ ४६॥

अन्वयः—हे तात!, तदा, चिन्तयतः, तस्य, तावद्, छायाभूतम्, महाद्युति, विग्रहवत्, तेजः, शरीरम्, अजहात्।

व्याख्या—हे तात!=हे पुत्र!, दुर्योधन!। तदा=तस्मिन् चिन्ताजनके काले, चिन्तयतः=शोकं कुर्वतः, तस्य=प्रह्लादस्य, तावत्=तत्क्षणमेव, छायाभूतम्=छायारूपकम्, महाद्युति=अतिकान्तिशालि, विग्रहवत्=शरीरधरम्, तेजः=ज्योतिः, प्रतिभेत्यर्थः। शरीरम्=प्रह्लादतनुम्, अजहात्=तत्याज।

समासादि—छाया इव भूतं प्रवृत्तमिति छायाभूतम्। महती द्युतिः, कान्तिर्यस्मिंस्तद् महाद्युति।

व्याकरणम्—चिन्तयतः=चिति+णिच्+शतृ। अजहात्=ओहाक्+लङ्।

वाच्यान्तरम्—विग्रहवता तेजसा शरीरमहीयत।

कोषः—'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः।

'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः।

'सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः' इत्यमरः।

सारार्थः—यावत्स च प्रह्लादः क्षणं चिन्तितस्तावदतितेजोयुक्तं शरीरीव तेजस्तद्देहाद् बहिर्ययौ।

भाषाऽर्थः—हे पुत्र दुर्योधन! तब (उक्त प्रकार से) शोच करते हुये उन (दैत्यराज प्रह्लाद) के उसी समय छाया रूप अत्यन्त कान्ति से युक्त शरीर धारण किये हुए तेज ने शरीर को छोड़ दिया (निकला)। अर्थात्–जब तक प्रह्लाद चिन्ता कर ही रहे थे कि एकाएक उनके शरीर से एक अत्यन्त तेजः शाली पुरुष जैसे साक्षात् देह धारण कर तेज ही आया हो, वैसा प्रह्लाद के शरीर को छोड़ निकला॥ ४६॥

तमपृच्छ(१)न्महाकायं प्रह्लादः को भवानिति।
प्रत्याह(२)स तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया॥ ४७॥

(१) 'महाभागः' इति वा पाठः। [व्याख्या—महाभागः=परमसौभाग्यशीलः]

(२) 'तं तु' इति वा पाठः [व्याख्या—तं=प्रह्लादम्]।

अन्वयः—प्रह्लादः, तं, महाकायं, 'प्रति' भवान्, कः ?, इति, अपृच्छत्, सः, च, 'शीलः, अस्मि, त्वया, त्यक्तः, अहं, गच्छामि, इति, प्रत्याह ।

व्याख्या—प्रह्लादः = एतन्नाम्ना सुप्रसिद्धः, तम् = स्वशरीरान्निःसृतम्, महाकायम् = विशालदेहम्, पुरुषं प्रति । भवान् = त्वम्, कः = किंनामकः, इति = एतद्, अपृच्छत = पृष्टवान्, सः = शरीरनिःसृतः, पुरुषः । च = अपि, (अहम्) शीलः = सौजन्यरूपः, अस्मि, = भवामि, त्वया = प्रह्लादेन, त्यक्तः = परार्थमुत्सृष्टः, ( सन् ) अहं = शीलः, गच्छामि, = यामि, यस्मै त्वयाऽहं दत्तस्तं प्रति यामि । इति = एतत्, प्रत्याह = प्रतिकथयति ।

समासादि—महान् विशालः कायो देहो यस्य स महाकायस्तम् महाकायम् ।

व्याकरणम्—अपृच्छत् = प्रच्छ् + लङ् । प्रत्याह = प्रति + ब्रू + लट् । आहादेशः । अस्मि = अस् + लट् । त्यक्तः = त्यज् + क्तः । गच्छामि = गम् + लट् ।

वाच्यान्तरम्—प्रह्लादेन स महाकायोऽपृच्छयत, 'मया' शीलेन भूयत इति तेन प्रत्युच्यते, त्वया त्यक्तेन मया गम्यते ।

सारार्थः—शरीरनिर्गतमतिविपुलवपुषं पुरुषं विलोक्य विस्मितो हतप्रतिभश्च प्रह्लादस्तं प्रत्यवदत् को भवानस्ति ? कुतश्चास्माच्छरीरान्निर्गत इति श्रुत्वैव स निर्गतपुरुषः प्रह्लादं प्रत्युत्तरं ददौ 'यदहं तु शीलोऽस्मि यतोऽहं त्वया तस्मै ब्राह्मणाय विसर्जितस्तस्मात्तमनुसरन् गच्छामि, इतः परं त्वं शीलहीनो भवेति ।

भाषाऽर्थः—प्रह्लाद ने अपने शरीर से निकले हुए उस बड़े शरीर वाले पुरुष के प्रति आप कौन हैं ? ऐसा पूंछा, ( यह सुन कर ) निकले हुए उस पुरुष ने भी ( जबाब दिया कि ) मैं शील हूं तुमने मुझे छोड़ दिया अतः मैं जाता हूं ॥ ४७ ॥

तस्मिन् द्विजोत्तमे राजन् ! वत्स्याम्यह(१)मनिन्दित ! ।
योऽसौ (२)विप्रत्वमागम्य त्वयि नित्यं समाहितः ॥ ४८ ॥

अन्वयः—हे अनिन्दित !, राजन् ! यः, असौ, विप्रत्वम्, आगम्य, त्वयि, नित्यं, समाहितः, तस्मिन्, द्विजोत्तमे, अहं, वत्स्यामि ।

व्याख्या-हे अनिन्दित ! = हे प्रशंसनीय !, सर्वश्लाघ्यगुणोपेत ! इत्यर्थः। हे राजन् ! = हे महाराज प्रह्लाद ! । यः = पूर्वोक्तः, असौ = एषः, विप्रत्वम् = ब्राह्मणत्वम्, आगम्य = प्राप्य, ब्राह्मणरूपं धृत्वेति तात्पर्यम् । अनेन स ब्राह्मणः कश्चिद् ब्राह्मणेतरः, त्वत्तः शिक्षालाभार्थमेव विश्वासपात्रतां धृतवान्, येन त्वं शिक्षादाने नान्यथाभावं करिष्यसि, इति भावः । त्वयि = भवति, प्रह्लादे । नित्यम् = अनवरतम्, समाहितः = सन्निकटवर्त्ती, आसीत् । तस्मिन् = पूर्वोक्ते, द्विजोत्तमे = ब्राह्मणश्रेष्ठे, इन्द्र इत्यर्थः । अहम् = शीलः, (इतो गत्वा) वत्स्यामि = वासं करिष्यामीति ।

समासादि—द्विजेषूत्तमो द्विजोत्तमस्तस्मिन् द्विजोत्तमे । न निन्दितोऽनिन्दितस्तत्सम्बोधने हे अनिन्दित ! । विप्रस्य भावो विप्रत्वम् ।

व्याकरणम्—वत्स्यामि = वस् + लट् । आगम्य = आङ् + गम् + ल्यप् । समाहितः = सम् + आङ् + डुधाञ् + क्तः ।

वाच्यान्तरम्—मया द्विजोत्तमे वत्स्यते, त्वयि नित्यं समाहितेन येनाभूयत ।

कोषः—'विप्राण्डक्षत्रिया द्विजाः' इत्यमरः । 'नित्यानवरताजस्रम्' इत्यमरः ।

सारार्थः—त्वया विसर्जितोऽहं तस्य निकटं यामि, येनाधुना गुरुवृत्तिः सम्यग्विहिता ।

भाषाऽर्थः—हे प्रशंसनीय गुणों से युक्त महाराज प्रह्लाद ! जो यह ( अभी ) ब्राह्मण बन कर तुम्हारे पास हर वक्त सावधान चित्त होकर ( दास की भांति ) रहता था ( अब ) उसी

( १ ) 'अरिन्दम !' इति वा पाठः । [ व्याख्या—अरिन्दम ! = शत्रुसूदन ! ] ।
( २ ) 'शिष्यत्वम्' इति वा पाठः । [ व्याख्या —शिष्यत्वम् = अन्तेवासित्वम् ] ।

ब्राह्मण में ( रहने के लिये ) मैं ( तुमको छोड़ कर ) जाता हूं ॥ ४८ ॥

इत्युक्त्वा(१)सहितं तद्वै शक्रं चान्वाविशत् प्रभो ! ।
तस्मिन् तेजसि याते तु तादृग्रूपस्ततोऽपरः ॥ ४९ ॥
शरीरान्निर्गतस्तस्य को भवानिति (२) चाब्रवीत् ।
धर्मं प्रह्लाद ! मां विद्धि यत्रासौ द्विजसत्तमः ॥ ५० ॥
तत्र यास्यामि दैत्येन्द्र ! यतः शीलं ततो ह्यहम् ।
ततोऽपरो महाराज ! प्रज्वलन्निव तेजसा ॥ ५१ ॥
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ।
को भवानिति पृष्टश्च तमाह स महाद्युतिः ॥ ५२ ॥
सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ।
तस्मिन्ननुगते (३) सत्ये महान् वै पुरुषोऽपरः ॥ ५३ ॥
निश्चक्राम ततस्तस्मात् पृष्टश्चाह (४)महाबलः ।
वृत्तं प्रह्लाद ! मां विद्धि यतः सत्यं ततो ह्यहम् ॥ ५४ ॥

अन्वयः -प्रभो !, (दुर्योधन !), तद्, च, इति, उक्त्वा, सहितं, शक्रं, वै, अन्वाविशत्, तस्मिन्, तेजसि, याते, तु, ततः, तादृग्रूपः, अपरः, तस्य, शरीराद्, निःसृतः, 'भवान्, कः, इति, (पृष्टः, सन् ) अब्रवीत्, हे प्रह्लाद' !, दैत्येन्द्र !, मां, धर्मं, विद्धि, असौ, द्विजसत्तमः, यत्र, तत्र, यास्यामि, हि, यतः, शीलं, ततः, अहम्, हे महाराज !, ततः, तेजसा, प्रज्वलन्, इव, अपरः, महात्मनः, तस्य, प्रह्लादस्य, शरीराद्, निःसृतः, च, भवान्, कः ?, इति, पृष्टः, महाद्युतिः, सः, तम्, आह, हे असुरेन्द्र !, मां, सत्यं, विद्धि, अद्य, अहं, धर्मम्, अनु, प्रयास्ये, 'ततः' तस्मिन्, सत्ये, अनुगते, वै, महान्, अपरः, पुरुषः, तस्माद्, निश्चक्राम, ततः, पृष्टः, महाबलः, च, 'हे, प्रह्लाद !, मां, वृत्तं, विद्धि, यतः, सत्यम्, ततः, हि, अहम्-, इति, आह ।

व्याख्या—हे प्रभो ! = शासक !, दुर्योधन ! । तद् = शीलम्, ( कर्तृ) तेजोरूपमित्यर्थः । च = अपि, इति = स्वपरिचयम्, उक्त्वा = कथयित्वा, सहितम् = हितेन सह वर्त्तमानं, समङ्गलम् । शक्रम् = इन्द्रम्, वै = निश्चयेन, अन्वाविशत् = अन्तर्विवेश, इन्द्रशरीरे प्रविष्ट इत्यर्थः । (पश्चात् ) तस्मिन् = तादृशे, तेजसि = तेजोरूपे शीले, याते = गते, प्रह्लादशरीराद् गतवति सति । तु । ततः = तदनन्तरम्, तादृग्रूपः = तत्तुल्यस्वरूपः, तेजोयुक्त इत्यर्थः । अपरः = अन्यः, द्वितीयः पुरुष इति भावः । तस्य = प्रह्लादस्य, शरीराद् = देहाद्, निःसृतः = बहिर्भूतः, आसीदिति शेषः । ( तं विलोक्य साश्चर्यं प्रह्लादेन ) भवान् = त्वं, कः = किंनामकः ? इति = एतत्, ( पृष्टः = जिज्ञासितः, सन् ) अब्रवीत् = अवदत्, हे प्रह्लाद ! = हे हिरण्यकशिपुसूनो !, दैत्येन्द्र ! = दैत्येश्वर !, माम् = अपरिचितपुरुषविशेषम्, धर्मं = सुकृतम्, विद्धि = जानीहि । ( तथा च ) असौ = एषः, अधुनैव यस्त्वत्तः शिक्षालाभायागत आसीत् स इत्यर्थः । द्विजसत्तमः = ब्राह्मणश्रेष्ठः, यत्र = यस्मिन् देशे, ( वर्त्तते ) तत्र = तस्मिन् स्थले, ( अहं ) यास्यामि = गमिष्यामि, हि = एव, कथमपि त्वया गृहीतस्त्वयि

(१) 'अन्तर्हितम्' इति वा पाठः । [ व्याख्या—अन्तर्हितम् = अलक्षितम् ] ।
(२) 'सोऽब्रवीत' इति वा पाठः [ व्याख्या—सः = प्रह्लादः ।
(३) 'धर्मं पुरुषे पुरुषोऽपरः' इति वा पाठः । व्याख्या—पुरुषे = सत्यात्मके इत्यर्थः । धर्म = सुकृतम् । अनुगते = अनुयाते, सतीति शेषः । अपरः = अन्यः, पुरुषः = पुरुषाकारः, वृत्तसंज्ञ इति भावः ।
(४) 'महातपाः' इति वा पाठः । [ व्याख्या = महातपाः = उग्रानुष्ठानकर्ता ] ।

न स्थास्यामि, इत्यर्थः । 'हि' एवार्थको ज्ञेयः । वा—हि = यतः, यस्मात्कारणाद्, यतः = यत्र, शीलम् = सौजन्यम्, (वर्त्तते वा याति) ततः = तत्र, अहं = धर्मः, (अपि वर्त्ते, वा यामि । इत्युक्त्वा मध्ये धृतराष्ट्रः स्वात्मजं सम्बोध्य वदति-यद्) हे महाराज ! = हे दुर्योधन !, ततः = परिचयकथनगमनानन्तरम्, तेजसा = दीप्त्या, प्रज्वलन् = प्रकर्षेण चञ्चत्कान्तिः, अग्निः । इव = यथा, अपरः = तृतीयः, पुरुष इति भावः । महात्मनः = महाप्रभावस्य, प्रह्लादस्य = एतन्नामकदैत्यविशेषस्य, शरीराद् = देहाद्, निःसृतः = बहिर्भूतः, गन्तुमुद्यत इति तात्पर्यम्। च = पुनः, (गन्तुमुद्यतः सोऽपि विस्मयोत्फुल्ललोचनेन प्रह्लादेन, "अहो") भवान् कः ? = त्वं कोऽसि ?, इति = एवम्, पृष्टः = अनुयुक्तः, महाद्युतिः = अतितेजस्वी, सः = तृतीयः, पुरुषः । तं = प्रह्लादम्, प्रति । आह = वदति, हे असुरेन्द्र ! = दैत्येन्द्र!, मां = तृतीयम् पुरुषम्, सत्यं = तथ्यम्, विद्धि = जानीहि, अद्य = अधुना, अहं = सत्यरूपः, धर्मं = सुकृतम्, अनुप्रयास्ये = पृष्ठतो गमिष्यामि, अर्थादहं धर्मस्यैव सहचरोऽस्मि, यतो धर्मस्ततः सत्यं वर्त्तत इति भावः। (एवं ततः = तदनन्तरम्,) तस्मिन् = पूर्वोक्ते, सत्ये = ऋते, अनुगते = धर्मं प्रति पृष्ठतः प्रस्थिते, सति। वै = निश्चयेन, महान् = विशालकायः, अपरः = अन्यः, चतुर्थ इति यावद् । पुरुषः = पुरुषाकारः, तस्मात् = प्रह्लाददेहाद्, निश्चक्राम = निर्गतः, ततः = निर्गमनानन्तरम्, (तमपि निःसृतं विलोक्यातीव चकितेन प्रह्लादेन ) पृष्टः = परिचयावगमार्थं जिज्ञासितः, महाबलः = विपुलवीर्यः, चतुर्थः पुरुष इति भावः । च = अपि, हे प्रह्लाद ! = हे हिरण्यकशिपुसूनो !, मां = चतुर्थं पुरुषं, वृत्तम् = सदाचारम्, विद्धि = जानीहि, यतः = यत्र, सत्यम् = तथ्यम् (याति) ततः = तत्र हि = एव, अहम् = वृत्तरूपोऽपि, (यामि) इति = एतद्, आह = कथयति, अर्थादहं सत्यानुचरः, सत्यन्तु धर्मानुचरं, धर्मस्तु शीलानुचरः, अतः, शीलं यत्र वसति तत्रैव वयं धर्मसत्यवृत्तानि वसाम इति भावः। अर्थाद्-शीलधर्मसत्यवृत्तानि मिथः सम्बद्धानीति।

समासादि—द्विजेषु सत्तमो द्विजसत्तमस्तत्सम्बोधने हे द्विजसत्तम ! । दैत्येष्विन्द्रो दैत्येन्द्रः, तत्सम्बोधने हे दैत्येन्द्र ! । महांश्चासौ राजा महाराजस्तत्सम्बोधने हे महाराज ! । महानात्मा यस्य स महात्मा तस्य महात्मनः । महती द्युतिर्यस्य स महाद्युतिः । असुरेष्विन्द्रोऽसुरेन्द्रः, तत्संबुद्धौ हे असुरेन्द्र ! । महद् बल यस्य स महाबलः ।

व्याकरणम्—उक्त्वा = वच् + क्त्वा । अन्वाविशत् = अनु + आङ् + विश् + लङ् । अब्रवीत = ब्रू + लङ् । विद्धि = विद् + लोट् । यास्यामि = या + लृट् । निःसृतः = निस् + सृ + क्तः । आह = ब्रू + लट् । आहादेशः । विद्धि = विद् + लोट् । प्रयास्ये = प्र + या + लृट् । निश्चक्राम = निस् + क्रम् + लिट् । पृष्टः = प्रच्छ् + क्तः ।

वाच्यान्तरम्—तेन शीलेन शक्रोऽन्वाविश्यत, स्वशरीरान्निर्गतेन धर्मेण ( प्रह्लादेन पृष्टेन सता) ओच्यत, त्वयाऽहं धर्मो विद्यै, अनेन द्विजसत्तमेन यत्र वृत्यते तत्र मया यास्यते, हि यतः शीलेन वृत्यते ततो मया वृत्यते, शरीरान्निःसृतेन पृष्टेन च सत्येन प्रह्लाद उच्यते, अहं सत्यं विद्यै, मया प्रयास्यते, वृत्तेन निश्चक्रमे, त्वयाऽहं वृत्तं विद्यै, इति तेनोच्यते ।

कोषः—'वृत्तं पद्ये चरित्रे च' इत्यमरः ।

'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः' इत्यमरः ।

सारार्थः—प्रह्लाददेहान्निर्गते शीले, धर्मोऽपि तस्मान्निर्गतः सत्यमपि बहिर्गतम्, सत्ये च निःसृते वृत्तमपि निःसृतमेव शीलधर्मसत्यवृत्तात्मकाश्चत्वारोऽपि भावा इन्द्रदेहं गता इति, यतो यस्य शीलमस्ति तस्य धर्मादयस्त्रयोऽपि स्वयं भवन्ति, यस्य तु शीलमेव नास्ति तस्य वर्तमाना अपि धर्मसत्यवृत्तात्मकाः सहसा तस्मान्निर्गच्छन्तीति ।

भाषाऽर्थः—हे महाराज दुर्योधन ! उस शील ने भी इस प्रकार से कहकर ( प्रह्लाद को छोड़ ) कल्याणयुक्त इन्द्र के तरफ चला गया, उस तेजःस्वरूप शील के जाने के बाद फिर वैसा ही तेजस्वी दूसरा (पुरुष) उसके शरीरसे निकला, अर्थात्—निकल कर चला, (तब प्रह्लाद

ने)'भाई ! तुम कौन हो !' ऐसा (पूंछा, तब उसने) जबाब दिया, कि हे प्रह्लाद ! मुझे तुम धर्म समझो, अर्थात्-मैं धर्म हूं, वह ब्राह्मण जहां ( गये वहीं ) जाऊंगा, क्योंकि जहां पर शील रहता है, वहीं पर मैं ( रहता हूँ, फिर धृतराष्ट्र ने अपने पुत्र दुर्योधन से कहा कि), 'हे महाराज ! उसके बाद, तेज से जलते हुये ( अग्नि) के समान ( उस समय ] जो तीसरा पुरुष अत्यन्त प्रभावशाली उन प्रह्लाद जी के शरीर से निकला (उससे भी) 'आप कौन हैं" ऐसा प्रह्लाद ने पूंछा तो अत्यन्त तेजस्वी उस तीसरे पुरुष ने उन ( प्रह्लादजी) से कहा कि--हे दानवेन्द्र ! मुझे तो आप सत्य समझें, इस समय मैं धर्म के पीछे जाऊंगा, अर्थात्-जा रहा हूं, ( यह कहकर वह भी चला ) बाद उस सत्यरूपी पुरुष के ( धर्म के पीछे ) चले जाने पर बडा भारी चौथा पुरुष उन ( प्रह्लादजी के शरीर ) से निकला, उसके बाद पूछने पर महाबलवान् चौथे पुरुष ने भी 'हे प्रह्लाद !'मुझे 'वृत्त' याने सदाचार समझो, जहां सत्य जाता है, वहीं पर मैं भी जाता हूं,' [ क्या करूं भाई ! मेरे सब साथी चले गये अकेले मैं कैसे रहूं ] ऐसा कहा ॥४९॥५०॥५१॥५२॥५३॥५४॥

तस्मिन् गते(१)महाशब्दः शरीरात्तस्य निर्ययौ ।
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ॥ ५५ ॥

अन्वयः--तस्मिन्, गते, तस्य, शरीराद्, महाशब्दः, 'पुरुषः' निर्ययौ, च, पृष्टः, आह, मां, बलं, विद्धि, यतः, वृत्तं, ततः, अहम् ।

व्याख्या--तस्मिन्=वृत्ते, सदाचार इत्यर्थः । गते=निर्गते, तस्य=प्रह्लादस्य, शरीरात्=तनोः, देहादित्यर्थः । महाशब्दः=अतिदीर्घरवः, पुरुषाकार इति भावः। निर्ययौ=निर्गतः, (प्रह्लादेन) पृष्टः=परिचयज्ञानाय जिज्ञासितः, च=अपि, आह=ब्रवीति, (यद्) माम्=त्वत्संमुखस्थम्=प्रभावम्, वीर्यं वा । विद्धि=जानीहि, कुतस्त्वं निःसृत इत्याशङ्क्याह--यतः=यत्र, वृत्तम्=सदाचारः, ( तिष्ठति ) ततः=तत्र, एव । अहं=वृत्तरूपः, ( अपि तिष्ठामि ) त्वं तु सदाचाररूपनित्यकर्मच्युतोऽसि, अतस्त्वां मुञ्चामीति भावः ।

समासादि--महान् शब्दो यस्य स महाशब्दः ।

व्याकरणम्--निर्ययौ=निर्+या+लिट्। पृष्टः=प्रच्छ्+क्तः। विद्धि=विद्+लोट्। अपृच्छत्=प्रच्छ्+लङ्। अब्रवीत्=ब्रू+लङ् ।

वाच्यान्तरम्--महाशब्देन निर्ययये, पृष्टेनोच्यते, ( त्वया ) अहं बलं विद्यै ।

कोषः--'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः ।

सारार्थः--यदा वृत्तं तस्य देहान्निर्गतं तदैव बलमपि निःसृतम्, यतो--वृत्ताभावे बलं न क्षणमपि वर्त्तते ।

भाषाऽर्थः--उस ( सदाचार ) के जाने के बाद उन ( प्रह्लाद जी ) के शरीर से जिसका बड़ा भारी शब्द था ऐसा पुरुष ( बल भी ) निकला, और ( प्रह्लाद के ) पूछने पर ( उसने बताया कि-मुझे बल समझो, जहां सदाचार रहता है, वहां मैं भी रहता हूं, ( वह तुमको छोड़ कर गया, इसी से मैं भी छोड़ कर जाता हूं ) ॥ ५५ ॥

इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप ! ।
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ॥
तामपृच्छत् स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् ॥ ५६ ॥

अन्वयः--हे नराधिप !, इति, उक्त्वा, यतः, वृत्तं, तत्र, ( बलं कर्तृ ) प्रययौ, ततः, प्रभामयी, देवी, तस्य, शरीराद्, निर्ययौ, सः, दैत्येन्द्रः, ताम्, अपृच्छत्, सा, एनं, श्रीः, इति, अब्रवीत् ।

---

( १ ) 'महाश्वेतः' इति वा पाठः । [ व्याख्या-महाश्वेत=अतिधवलवर्णः, गौराङ्ग इत्यर्थः ]।

व्याख्या--हे नराधिप ! = हे जनेश !, वा नरेश ! । इति = स्वपरिचयम्, उक्त्वा = कथयित्वा, यतः = यत्र, वृत्तम् = सदाचारः, वर्त्तते, तत्र = तस्मिन् स्थले, ( बलं कर्तृ ) प्रययौ = गतवान्, ततः = बलगमनानन्तरम्, प्रभामयी = कान्तिरूपा, तेजोरूपेति वा । देवी = देवता, तस्य = प्रह्लादस्य, शरीराद् = देहाद्, निर्ययौ = निर्गता, ( ततः ) सः = पूर्वोक्तः, दैत्येन्द्रः = प्रह्लादः, तां = कान्तिमयीं देवीम्, का त्वमसीति । अपृच्छत् = पृष्टवान्, ( ततः ) सा = देवी, एनं = प्रह्लादम्, 'अहं' श्रीः = लक्ष्मीः, "अस्मि " इति = एतद्, अब्रवीत् = अवदत् ।

समासादि--नरेष्वधिपो नराधिपस्तत्सम्बोधने हे नराधिप ! ।

व्याकरणम्--उक्त्वा = वच् + क्त्वा । प्रययौ = प्र + या + लिट् । निर्ययौ = निर् + या + लिट् । अपृच्छत् = प्रच्छ् = लङ् । अब्रवीत् = ब्रू + लङ् ।

वाच्यान्तरम्--तेन प्रयये, ततः प्रभामय्या देव्या शरीराद् निर्यये, दैत्येन्द्रेण साऽपृच्छयत, तया श्रिया एष ओच्यत ।

कोषः--'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः ।

सारार्थः--यत्र वृत्तं गतं तत्रैव बलेऽपि गते सति, एका तेजस्विनी देवी प्रह्लाददेहान्निःसृता, प्रह्लादेन पृष्टा सा 'अहं लक्ष्मी'रिति तमुवाच ।

भावार्थः—जहां वृत्त गया, वहीं बल भी चला गया उस के बाद एक बड़ी कान्तिमती देवी उस प्रह्लाद के शरीर से निकली, और उस दैत्येन्द्र प्रह्लाद ने उस ( देवी ) से पूछा ( कि तुम कौन हो तब ) उसने उस ( प्रह्लाद ) से (मैं) (लक्ष्मी हूं), यह कहा अर्थात् उसने अपना नाम लक्ष्मी बताया ॥ ९६ ॥

उषिताऽस्मि (१)स्वयं वीर ! त्वयि सत्यपराक्रम ! ।
त्वया त्यक्ता गमिष्यामि, बलं ह्यनुगता ह्यहम् ।। ५७ ।।

अन्वयः—वीर !, सत्यपराक्रम !, त्वयि, स्वयम्, उषिता, अस्मि, त्यक्ता, 'सती' गमिष्यामि, हि, बलम्, हि, अहम्, अनुगता ।

व्याख्या—हे वीर ! = हेशूर !, हे सत्यपराक्रम ! = हेअमोघविक्रम !, प्रह्लाद ! । त्वयि = प्रह्लादे, स्वयम् = आत्मना, ( अकथिताऽप्रार्थिता ), उषिता = निवसन्ती, अस्मि = तिष्ठामि, ( परन्तु—त्वया = प्रह्लादेन ), त्यक्ता = दूरीकृता, ( सती ), गमिष्यामि = यास्यामि, हि = यतः, बलम् = वीर्यं, हि = एव, अहं = लक्ष्मीः, अनुगता = अनुप्रस्थिता, (अस्मि) ।

समासादि—सत्यः पराक्रमो यस्य स सत्यपराक्रमस्तत्सम्बोधने हे सत्यपराक्रम ! ।

व्याकरणम्—उषिता = वस् + क्तः + टाप् । अस्मि = अस् + लट् । त्यक्ता = त्यज् + क्तः + टाप् । गमिष्यामि = गम् + लट् । अनुगता = अनु + गम् + क्तः + टाप् ।

वाच्यान्तरम्—त्वया त्यक्तया मया गमिष्यते ।

सारार्थः—यावद् बलं त्वयि स्थितमासीत्तावदहमपि स्थिता, अधुना तु गते बले, अहमपि तमनुयामि, एवं लक्ष्मीः प्रह्लादं प्रत्युवाच ।

भावार्थः—हे वीर ! अव्यर्थ पराक्रम वाले प्रह्लाद ! ( मैं इतने देर तक ) तुम्हारे पास स्वयं (वगैर कहे) रहती थी, किन्तु अब तेरे छोडने से मैं जारही हूं क्यों कि बल का ही मैं अनुगमन करने वाली हूं, अर्थात्-जहां बल रहता है वहीं मैं भी रहती हूं ॥ ९७ ॥

ततो भयं प्रादुरासीत् प्रह्लादस्य महात्मनः ।
(२)अपृच्छत् स ततो भूयः क यासि कमलालये ! ।। ५८ ।।

---

( १ ) 'सुखं नित्यमि'ति वा पाठः । व्याख्या—सुखम्=आनन्दपूर्वकम्, नित्यम्=सर्वदा ।
( २ )' अपृच्छत च तां भूयः' इति वा पाठः । व्याख्या—ताम्=प्रभामयीं देवीम्, लक्ष्मीमित्यर्थः । अपृच्छत

अन्वयः—ततः, महात्मनः, प्रह्लादस्य, भयं, प्रादुरासीत्, ततः, सः, हे कमलालये !, 'त्वं' क्व, यासि, 'इति' भूयः, अपृच्छत् ।

व्याख्या—ततः = लक्ष्मीप्रस्थानानन्तरम्, महात्मनः = महानुभावस्य, प्रह्लादस्य = एतन्नाम्ना प्रसिद्धस्य दैत्यवरस्य, भयं = भीतिः, (हृदये) प्रादुरासीद् = आविर्बभूव, ततः = भयजननानन्तरम्, सः = प्रह्लादः, हे कमलालये ! = हे लक्ष्मि !, (त्वम्) क्व = कुत्र, (अधुना), यासि = गच्छसि, (इति) भूयः = पुनः, अपृच्छत् = पृष्टवान्, मां विहाय कस्य शरणं यासीति ।

समासादि—कमलमालयो यस्याः सा कमलालया, तत्सबोधने हे कमलालये ! ।

व्याकरणम्—प्रादुरासीत् = प्रादुर् + अस् + लङ् । अपृच्छत् = प्रच्छ् + लङ् । यासि = या + लट् ।

वाच्यान्तरम्—भयेन प्रादुरभूयत, ततस्तेन साऽपृच्छयत, त्वया क्व यास्यते ।

कोषः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः ।

सारार्थः—लक्ष्मीमपि गच्छन्तीं विलोक्य प्रह्लादस्य मनसि महद्भयं संजातम्, निरस्तधैर्यस्त्वरितं तामुवाच—भगवति ! वृत्तबलादयस्तु गता एव, तेषां गमने न किमप्याश्चर्यं किन्तु त्वं मां परित्यज्य क्व यासि ? ।

भाषाऽर्थः—उसके बाद (वृत्त, बल, शील, आदिकों के चले जाने पर लक्ष्मी को भी जाती देखकर) महानुभाव प्रह्लाद के (हृदय में बडा) भय उत्पन्न हुआ, उसके बाद वह (घबडा कर) 'हे ! लक्ष्मि ! तू कहां जा रही है' ऐसा बार बार पूछने लगे ॥ ९८ ॥

त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ ९९ ॥

अन्वयः—हि, त्वं, सत्यव्रता, लोकस्य, परमेश्वरी, देवी, 'असि' च, असौ, ब्राह्मणश्रेष्ठः, कः, ? 'इति' तत्त्वं, वेदितुम्, इच्छामि ।

व्याख्या—हि = तु, वा—हि = निश्चयेन, त्वं = लक्ष्मीः, सत्यव्रता = तथ्यरूपनियमधारिणी, लोकस्य = संसारस्य, जगतो, वा । परमेश्वरी = अध्यक्षा, मुख्या स्वामिनी, पालयित्री, शासिका च वा । देवी = देवता, (असि) । च = अपि, असौ = एषः, ब्राह्मणश्रेष्ठः = द्विजोत्तमः, कः = किंनामकः, (इति) तत्त्वम् = सारं, रहस्यमित्यर्थः । वेदितुं = ज्ञातुम्, अवगन्तुम् । इच्छामि = अभिलषामि ।

समासादि—सत्यं व्रतं यस्याः सा सत्यव्रता । परमा चासावीश्वरी परमेश्वरी । ब्राह्मणेषु श्रेष्ठो ब्राह्मणश्रेष्ठस्तत्सम्बुद्धौ हे ब्राह्मणश्रेष्ठ ! ।

व्याकरणम्—इच्छामि = इष् + लट् । वेदितुम् = विद् + तुमुन् ।

वाच्यान्तरम्—मया तत्त्वं वेदितुमिष्यते ।

सारार्थः—त्वया स्वीयः परिचयो दत्तः, जानामि त्वामखिललोकेश्वरीं लक्ष्मीम्, परन्तु योऽसौ मत्सन्निधानेऽध्ययनायागतो विप्रवरः, यत्पृष्ठतोऽस्मद्देहाद् शीलधर्मसत्यवृत्तबलादयो गताः स च कः ?, इति मम तत्परिचयेनोत्कण्ठानिवृत्तिं कुर्विति ।

भाषाऽर्थः—निश्चय करके आप सत्यरूप नियम का पालन करने वाली संसार की मालिक, लक्ष्मी देवी हैं (यह मैं जानता हूं) किन्तु वह ब्राह्मणों में श्रेष्ठ कौन था ? कि (जिसके पीछे मेरे शरीर से निकल निकल शील, धर्म, सत्य, वृत्त, बल, ये सब चले गए, और तूं भी चली जाती है) सो इस रहस्य के जानने के लिये मैं इच्छा रखता हूं अर्थात्—जानना चाहता हूं ॥ ९९ ॥

(लक्ष्मीरुवाच) लक्ष्मी बोली ।

**स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः ।**
**त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ! ॥ ६० ॥**

अन्वयः—हे प्रभो !, यः, ब्रह्मचारी, त्वत्तः च, उपशिक्षितः, सः, शक्रः, एव, 'आसीत्' तेन, त्रैलोक्ये, ते, यद्, ऐश्वर्यं, तद्, अपहृतम् ।

व्याख्या—हे प्रभो ! = हे दैत्यराज !, 'शृणु' इति शेषः । यः = अनिर्दिष्टः, ब्रह्मचारी = ब्रह्मचर्यनियमपालकः, जनः । त्वत्तः = भवतः, च = अपि, उपशिक्षितः = प्राप्तोपदेशः, यस्त्वयाऽध्यापित इति भावः । सः = पूर्वोक्तः, शक्रः = इन्द्रः, एव = निश्चयेन, आसीद्, नान्यो जनस्तवैव विदितो विप्रतिपक्षीति । तेन = इन्द्रेण, त्रैलोक्ये = स्वर्गमर्त्यपातालेष्वपि, ते = तव, प्रह्लादस्येत्यर्थः । यद् = यावद्, ऐश्वर्यम् = विभवः, तत् = सर्वम्, अपहृतम् = कपटेन स्वायत्तीकृतम्, इति । नेतः परं तव त्रैलोक्यराज्यं विद्यते, यस्य पूर्वमासीत्तस्य हस्त एव गतम् ।

व्याकरणम्—उपशिक्षितः = उप + शिक्ष् + क्तः । अपहृतम् = अप + हृ + क्तः ।

वाच्यान्तरम्—स इन्द्रस्ते ऐश्वर्यमपहृतवान् ।

सारार्थः—योऽसौ ब्राह्मणस्त्वत्समीपे पठनायागतः स चेन्द्रः साक्षात् तेन च तव त्रैलोक्यैश्वर्यं गृहीतम्, त्वमधुना केवलं कथं कथमपि पातालखण्डस्यैव साधारणो नरेशोऽसि, अथ च, इन्द्रस्य करदोऽपि ।

भाषाऽर्थः—हे महाराज प्रह्लाद ! जो ब्रह्मचर्य नियम का पालन करनेवाला ब्राह्मण आपसे शिक्षा प्राप्त कर रहा था वह इन्द्र ही था, उसने त्रैलोक्य में आपका जो ऐश्वर्य ( राज्य ) था उसे ( कपट से ) छीन ले गया ॥ ६० ॥

**शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ ! निर्जिताः ।**
**तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ! ॥ ६१ ॥**

अन्वयः—हे धर्मज्ञ !, हि, त्वया, शीलेन, त्रयः, लोकाः, निर्जिताः, हे प्रभो !, सुरेन्द्रेण, तद्, विज्ञाय, तव, शीलं, हृतम् ।

व्याख्या—हे धर्मज्ञ ! = हे प्रह्लाद !, हि = यतः, यस्मात्कारणादित्यर्थः । त्वया = भवता, शीलेन = सद्वृत्त्या, त्रयः = स्वर्गमर्त्यपातालाख्याः, लोकाः = भुवनानि, निर्जिताः = वशीकृताः, ( तस्माद् ) हे प्रभो ! = हे महाराज !, सुरेन्द्रेण = अमरनाथेन, इन्द्रेणेत्यर्थः । तद् = शीलम्, विज्ञाय = विचार्य, तव = भवतः, शीलं = सद्वृत्ति, हृतम् = अपहृतम्, माययाऽऽत्मसात्कृतम् ।

समासादि—धर्मं जानातीति धर्मज्ञस्तत्सम्बोधने हे धर्मज्ञ ! । सुरेष्विन्द्रः सुरेन्द्रस्तेन सुरेन्द्रेण ।

व्याकरणम्—निर्जिताः = निर् + जि + क्तः । हृतम् = हृ + क्तः ।

वाच्यान्तरम्—इन्द्रः शीलं हृतवान् ।

सारार्थः—यस्मात्त्वया पूर्वं शीलबलेनैव त्रिभुवनं वशीकृतं तज्ज्ञात्वा त्रिभुवनपतित्वाभिलाषिणेन्द्रेण, त्वत्तः शिक्षितम् ।

भाषाऽर्थः—हे धर्म को जाननेवाले ! जिस कारण से आपने ( सिर्फ ) शील से ही तीनों लोक को, जीता है, हे प्रभो ! प्रह्लाद ! इन्द्र उस बात को जान कर आपके शील को, (आप से सीख कर ) ले गया ॥ ६१ ॥

**धर्मः सत्यं तथा वृत्तं बलं चैव तथाऽप्यहम् ।**
**शीलमूला महाप्राज्ञ ! सदा नास्त्यत्र संशयः ॥ ६२ ॥**

अन्वयः—हे महाप्राज्ञ !, धर्मः, सत्यं, तथा, वृत्तं, बलं, च, एव, तथा, अहम्, अपि, ('एते, वयं, सर्वे,) सदा, शीलमूलाः, ( स्मः ) अत्र, संशयः, न, अस्ति ।

व्याख्या—हे महाप्राज्ञ ! = हे परमबुद्धिमन् !, धमः = सत्कृत्याख्यः, वेदबाधितकर्त्तव्यताकः। सत्यं = सकलव्यवहारे मिथ्याशून्यत्वम् , तथा = तद्वद्, वृत्तम् = सदाचाररूपम् , स्मृतिप्रोक्तम् । बलं = वीर्यम्, च = अपि, एव = निश्चयेन, तथा = तद्वद्, अहम् = लक्ष्मीः, अपि = च, (एते वयम्, सर्वे) सदा = सर्वदा, शीलमूलाः = शीलानुचराः, शीलानुगामिनः। (स्मः) यस्मिन् जने केवलं शीलमेव वर्त्तते, तत्र धर्मप्रभृतयो वयं स्वयमनाहूता अपि गच्छाम इति भावः । अत्र = अस्मिन् विषये, संशयः = सन्देहः, न = नहि, अस्ति = विद्यते ।

समासादि—शीलम् मूलं येषां ते शीलमूलाः । प्रकर्षेण जानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः, महांश्चासौ प्राज्ञो महाप्राज्ञस्तत्संबोधने हे महाप्राज्ञ ! ।

व्याकरणम् = अस्ति = अस् + लट् ।

वाच्यान्तरम्—( एतैरस्माभिः सर्वैः) शीलमूलैर्भूयते संशयेन न भूयते ।

सारार्थः—यः किल शीलशाली भवति, तस्मिन्नेव जने धर्मसत्यवृत्तबलक्ष्म्यश्च वर्त्तन्त एव,

भाषाऽर्थः—हे बड़े समझदार महाराज प्रह्लाद ! धर्म, सत्य तथा वृत्त, और तथा मैं भी, ( ये हम सब ) हर वक्त शील ही के आश्रय रहने वाले हैं, इसमें ( जरा भी ) सन्देह नहीं है ॥ ६२ ॥।

भीष्म उवाच । ( भीष्म बोले ।

एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर ! ।
दुर्योधनस्तु पितरं भूय एवाब्रवी(१)द्वचः ॥ ६३ ॥

अन्वयः—हे युधिष्ठिर !, एवम् ,उक्त्वा, श्रीः, तु, गता, ते, च, सर्वे, गताः , तु, दुर्योधनः, भूयः, एव, पितरम् , वचः, अब्रवीत् ।

व्याख्या—हे युधिष्ठिर ! = हे ज्येष्ठपाण्डव !, एवम् = अमुना, उपर्युक्तरूपेण । उक्त्वा = कथयित्वा, श्रीः = लक्ष्मीः, तु = अवधारणेऽर्थे, गता = प्रस्थिता, ते = शीलधर्मसत्यवृत्तबल-संज्ञकाः, च = अपि सर्वे = निखिलाः, गताः = चलिताः, ( ततः ) दुर्योधनः = धृतराष्ट्रज्येष्ठतनूजः, तु = अपि, पितृवचनं सर्वं श्रुत्वा । भूयः = पुनः, एव = निश्चयेन, पितरं = जनकं, धृतराष्ट्रम् । ( प्रति-शीललक्षणज्ञानाय) वचः = वचनं, वक्ष्यमाणमित्यर्थः । अब्रवीत् = अवदत् ।

समासादि—युधि तिष्ठतीति युधिष्ठिरस्तत्सम्बोधने हे युधिष्ठिर ! । दुःखेन युध्यत इति दुर्योधनः ।

व्याकरणम्—उक्त्वा = वच् + क्त्वा । गता = गम् + क्तः + टाप् । अब्रवीत् । ब्रू + लङ् ।

वाच्यान्तरम्—श्रिया गतम् , दुर्योधनेन पिता भूय ओच्यत ।

सारार्थः—एवं स्वस्येन्द्रस्य च परिचयं दत्वा, लक्ष्मीशीलादयः सर्वे इन्द्रं प्रति गताः, एतच्छ्रुत्वा दुर्योधनो विशेषेण शीललक्षणज्ञानाय सोत्कण्ठः स्वपितरं पृष्टवान् ।

भाषाऽर्थः—हे युधिष्ठिर ! इस तरह से कहकर अर्थात्-अपना और इन्द्रका परिचय देकर लक्ष्मी भी चली गई और वे सब शील धर्मादिक भी चले गए, ( और उसके बाद ) दुर्योधन ने भी अपने पिता से फिर भी ( आगे कही जाने वाली) बात कहा ॥ ६३ ॥

शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन ! ।
प्राप्यते च यथा शीलं तं चोपायं (२)वदस्व मे ॥ ६४ ॥

अन्वयः—हे कौरवनन्दन !, शीलस्य, तत्त्वं, वेत्तुम्, इच्छामि, च, शीलं, यथा, प्राप्यते, तम् , उपायम् , मे, वदस्व ।

---

( १ ) 'तदा' इति वा पाठः । [ व्याख्या—तदा=तस्मिन् समये, कथाश्रवणसमये ] ।

( २ ) 'ब्रवीहि मे' इति वा पाठः । [ व्याख्या- मे=मह्यम् , ब्रवीहि=कथय । )

व्याख्या—हे कौरवनन्दन ! = हेकुरुवंश्यानन्ददायक !, पितः ! । शीलस्य = सत्स्वभावस्य, तत्त्वम् = सारलक्षणम् , वेत्तुम् = ज्ञातुम् , इच्छामि = अभिलषामि, शीलं किंलक्षणमिति मे वदेति भावः । च = अपि, शीलं = सौजन्यम् , यथा = येन उपायेन, प्राप्यते = लभ्यते, तम् = तादृशम् , उपायं = प्रकारम् , मे = मह्यम् , वदस्व = कथय ।

समासादि—कुरो राज्ञो गोत्रापत्यानि पुमांसः कुरवस्तान् नन्दयतीति कौरवनन्दनस्त त्संबुद्धौ हे कौरवनन्दन, वा कुरुदेशभवा कौरवा जनास्तान् नन्दयतीति कौरवनन्दनस्तत्सं-बोधने हे कौरवनन्दन ! ।

व्याकरणम्—इच्छामि = इष् + लट् । वेत्तुम् = विद् + तुमुन् । प्राप्यते = प्र + आप् + कर्मणि लट् । वदस्व = वद् + लोट् । अत्राऽऽत्मनेपदस्त्वार्षः ।

वाच्यान्तरम्—मया तत्त्वं वेत्तुमिष्यते , यथा शीलं प्राप्नोमि मे उपाय उच्यताम् ।

सारार्थः—हे पितः ! शीलस्य किं लक्षणम् ? तथा तत्कथं लभ्यत इति च कृपया कथयेति।

भाषाऽर्थः—हे कुरुवंशियों के आनन्द देने वाले पिताजी ! शील के तत्त्व को मैं जानना चाहता हूं, और शील जिस (उपाय) से पाया जाता है उस उपायको मुझसे आप कहें ॥६४॥

धृतराष्ट्र उवाच ( धृतराष्ट्र बोले ) ।

सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना ।
सङ्क्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर ! ॥६५॥

अन्वयः—हे नरेश्वर !, पूर्वं, महात्मना, प्रह्लादेन, सोपायं , शीलम् , उद्दिष्टम् , 'अधुना' तु, संक्षेपेण, शीलस्य, प्राप्तिं, शृणु ।

व्याख्या—हे नरेश्वर ! = हे जनेश !, दुर्योधन ! । पूर्वं = प्रथमम् , वा पूर्वस्मिन् समये । महात्मना = महाप्रभावशालिना, प्रह्लादेन = एतन्नाम्ना प्रसिद्धेन दैत्येन, सोपायम् = शीललाभ-प्रकारसहितम् , शीलम् = सद्वृत्तम् , उद्दिष्टम् = इन्द्राय पाठितम् । ( अधुना ) तु = किन्तु, संक्षेपेण = सूक्ष्मरूपेण, शीलस्य = सत्स्वभावस्य, प्राप्तिम् = लाभयुक्तिम् , ( त्वं ) शृणु, = आकर्णय, मया कथ्यत इति शेषः ।

समासादि—उपायेन सहितं सोपायं तत् सोपायम् । महानात्मा यस्य स महात्मा, तेन महात्मना । नरेष्वीश्वरो नरेश्वरस्तत्सम्बोधने हे नरेश्वर ! ।

व्याकरणम्—शृणु = श्रु + लोट् ।

वाच्यान्तरम्—शीलस्य प्राप्तिः श्रूयताम् ।

सारार्थः—हे पुत्र दुर्योधन ! यत् पुरा प्रह्लादेनेन्द्रायोक्तं, तत्संक्षेपेण तुभ्यं कथयामि, शृणु ।

भाषाऽर्थः—हे राजन् दुर्योधन ! पहले महानुभाव प्रह्लाद ने (इन्द्र से) जो इस शील के पाने के लिये उपाय बताया था, इस समय मुख्तसर से उसी शील के प्राप्त करने का उपाय ( कहता हूं ) तुम सुनो ॥ ६५ ॥

अथ शीललक्षणम् ।

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥ ६६ ॥

अन्वयः—सर्वभूतेषु, कर्मणा, मनसा, गिरा, अद्रोहः, अनुग्रहः, च, दानं, च, एतत् , 'शीलम्' प्रशस्यते ।

व्याख्या—सर्वभूतेषु = सकलप्राणिषु, कर्मणा = क्रियया, वा कायेन । मनसा = चेतसा, वा मानसेन । गिरा = वचसा वा भाषया । अद्रोहः = द्रोहाभावः, अहिंसारूपव्यापारः । अनुग्रहः = अभ्युपगमः, दयादर्शनम् । च = अपि, दानं = धनव्ययः, च = अवधारणेऽर्थे, एतद् = इति ( शीलम् ), प्रशस्यते = उत्तमरूपेण कथ्यते ।

समासादि—न दोहोऽद्रोहः । सर्वाणि च तानि भूतानि सर्वभूतानि तेषु सर्वभूतेषु ।

व्याकरणम्—प्रशस्यते = प्र + शंस् + कर्मणि लट् ।

वाच्यान्तरम्—जना एतद् शीलं प्रशंसन्ति ।

कोषः—'द्रोहो विरोधो वैरञ्च'इति कोषः ।

'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः ।

'अनुग्रहः कृपा घृणा' इति कोषः ।

सारार्थः—सर्वप्राणिनां कर्मणा मनसा वाचा हानिं न कुर्यात्, तथा तेषामुपरि सदा दया कर्तव्या, दानञ्च दरिद्राय दातव्यमित्येव शीलं निगद्यते ।

भाषाऽर्थः-सब प्राणियों के विषयमें, कार्य, मन तथा, बाणी से भी हानि कभी न करना, और दया रखना, तथा दान देना, इसी को लोग शील रूप से कहते हैं ।। ६६ ॥

यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत् कुर्यात्कथञ्चन ॥ ६७ ॥

अन्वयः— यद् , अन्येषां, हितं, न, स्याद् , वा, येन, अपत्रपेत, तद्, आत्मनः, पौरुषं, कथं चन, न, कुर्यात् ।

व्याख्या-यत = कर्म, अन्येषां = परेषाम्, हितं = कल्याणकरम्, न = नहि, स्याद् = भवेद् , वा = अथवा, येन = यादृशेन, कर्मणा । अपत्रपेत = लज्जेत, तत् = तादृशम् ,आत्मनः = स्वस्य, पौरुषम् = पुरुषसम्बन्धि, वा नरोचितम् । कर्म = कार्यम् , कथञ्चन = कथमपि दशायाम् , न = नहि, कुर्याद् = आचरेत् ।

समासादि—पुरुषस्येदं पौरुषं तत् ।

व्याकरणम्—अपत्रपेत = अप + त्रप् + विधिलिङ् । कुर्यात् = कृ + विधिलिङ् ।

वाच्यान्तरम्—येन हितेन न भूयते कर्मणा पौरुषेणापत्रप्येत, तद् न क्रियेत ।

सारार्थः—तदेव कार्यं कुर्याद् येन लोकानां किमपि कल्याणं भवेत्, तथा लोकाः प्रसन्नाश्च येन भवेयुः, एतदपि सङ्क्षेपेण शीललक्षणमुक्तम् ।

भाषाऽर्थः—जिससे पराये का कल्याण न हो, और जिससे लोक में लज्जित होना पड़े, ऐसा अपने पुरुषार्थ से किया हुआ कार्य किसी तरह से भी नहीं करना चाहिए ( यह भी शील ही है ) ॥ ६७ ॥

तत्तु कर्म तथा कुर्याद् येन श्लाघ्येत संसदि ।
शीलं समासेनतत्ते कथितं कुरुसत्तम ! ॥ ६८ ॥

अन्वयः—येन, संसदि, श्लाघ्येत, तत्, तु, कर्म, तथा, कुर्यात्, हे कुरुसत्तम !, समासेन, एतत्, शीलम्, ते, कथितम् ।

व्याख्या—येन = यादृशेन, कर्मणा । संसदि = सभायाम्, श्लाघ्येत = प्रशस्येत, तत् = तादृशम् , तु = अ.प, कर्म = कार्यम्, तथा = तद्वत् , कुर्यात् = समाचरेत् , हे कुरुसत्तम ! = हे कौरवप्रधान !, समासेन = सङ्क्षेपेण, एतद् = इदम् , शीलम् = सत्स्वभावम्, ते = तुभ्यम् , कथितम् = प्रतिपादितम् ।

समासादि—कुरुषु सत्तम-इति कुरुसत्तमस्तत्संबुद्धौ हे कुरुसत्तम ! ।

व्याकरणम्—कुर्यात् = कृ + विधिलिङ् । श्लाघ्येत = श्लाघ् + कर्मणि लिङ् । कथितम् = कथ + क्तः ।

वाच्यान्तरम्—तथा कर्म क्रियेत ।

सारार्थः—येन कर्मणा जनानां प्रशंस्यो भवेत्, तद् विधेयमिति संक्षेपेण शीललक्षणम् ।

भाषाऽर्थः—जिस काम काज से जिस भांति सभा में ( दस आदमियों में ) प्रशंसा

होवै वही काम काज उस भांति से करै, सो हे कुरुकुलमुख्य ! सङ्क्षेप में यह शील तुमसे मैंने कहा ॥ ६८ ॥

यद्यप्यशीला नृपते ! प्राप्नुवन्ति श्रियं क्व चित् ।
न भुञ्जते चिरं तात ! समूलाश्च(१)न सन्ति ते ॥ ६९ ॥

अन्वयः—हे नृपते !, यद्यपि, क्व चित्, अशीलाः, ( अपि, लोकाः ) श्रियम्, प्राप्नुवन्ति, ( परन्तु ) ते, चिरं, तां, न, भुञ्जते, च, समूलाः, न, सन्ति ।

व्याख्या—हे नृपते ! = हे राजन् !, यद्यपि = चेत्, क्व चित = कुत्रापि, अशीलाः = दुःशीलाः, ( अपि, जनाः ) श्रियं = लक्ष्मीम्, प्राप्नुवन्ति = लभन्ते, ( परन्तु ) ते = दुःशीलाः, चिरं = दीर्घकालपर्यन्तम्, ( लब्ध्वाऽपि ) ताम् = श्रियम्, न = नहि, भुञ्जते = भोक्तुं प्रभवन्ति, च = अपि, समूलाः = मूलसहिताः, ( ते ) न = नहि, सन्ति = भवन्ति, सवंशास्ते विलीना-भवन्तीत्यर्थः । यथा रावणादयो राजानः ।

समासादि—अविद्यमानं शीलं येषां तेऽशीलाः ।

व्याकरणम्—प्राप्नुवन्ति = प्र + आप् + लट् । भुञ्जते = भुज् + लट् । सन्ति = अस् + लट् ।

वाच्यान्तरम्—अशीलैः श्रीः प्राप्यते, चिरं न भुज्यते, समूलैश्च न भूयते ।

सारार्थः—प्रथमन्तु दुःशीला लक्ष्मीं लभन्त एव नहि, अयं मुख्यः पक्षः, अथवा--दैवा-त्क । चद् यदि लभन्ते, तदा दीर्घकालं न भोगं कुर्वन्ति, तथा च सवंशाः प्रलयं सर्वे गच्छ-न्ति दुराशयाः, एवं तेषां दुर्गतिर्भवति ।

भाषाऽर्थः—हे राजन् ! यद्यपि कहीं शीलहीन जन भी ( विना शील के लोग भी ) लक्ष्मी को पाते हैं, तो भी वे देर तक उस लक्ष्मी का भोग नहीं कर सकते, बल्कि कुल मूल सहित नष्ट हो जाते हैं जैसे रावणादिक ॥ ६९ ॥

धृतराष्ट्र उवाच ( धृतराष्ट्र बोले ) ।

एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक ! ।
यदीच्छसि श्रियं तात ! सुविशिष्टां युधिष्ठिरात् ॥ ७० ॥

अन्वयः—हे तात !, यदि, युधिष्ठिरात्, सुविशिष्टां, श्रियम्, इच्छसि, तदा, हे पुत्रक !, तत्त्वेन, एतद्, विदित्वा, शीलवान्, भव ।

व्याख्या-हे तात ! हे प्रिय !, यदि = चेद्, युधिष्ठिराद् = ज्येष्ठपाण्डवात्, सुविशिष्टाम् = समधिकाम्, श्रियं = सम्पत्तिम्, इच्छसि = अभिलषसि, तदा = तर्हि, हे पुत्रक ! = हेवत्स !, तत्त्वेन = यथार्थतया, एतत् = पूर्वोक्तम्, शीललक्षणम् । विदित्वा = ज्ञात्वा, शीलवान् = शी-लसम्पन्नः, भव = भवेः ।

समासादि—शीलमस्त्यस्येति शीलवान् ।

व्याकरणम्—विदित्वा + विद् + क्त्वा । भव = भू + लोट् । इच्छसि = इष् + लट् । सुविशिष्टाम् = सु + वि + शास् + क्तः + टाप् ।

वाच्यान्तरम्—शीलवता भूयताम्, यदि श्रीरिष्यते ।

सारार्थः—यदि चित्ते ते युधिष्ठिरादधिकैश्वर्यलाभाशया त्विन्ता विद्यते, तदा शीलवान् भवेति ।

भाषाऽर्थः—हे प्रिय दुर्योधन ! अगर तुम्हें युधिष्ठिर से ज्यादे सम्पत्ति पाने की इच्छा होती है, तो हे वत्स ! जो मैंने शील का लक्षण बताया है उसको ठीक ठीक सीख कर, शीलवान् बनो ॥ ७० ॥

---

( १ ) 'पतन्ति ते' इति वा पाठः । ( व्याख्या—त=अशीलाः, राजान इत्यर्थः । पतन्ति=स्वस्थानाद् च्यवन्ति ) ।

एतत् कथितवान् पुत्रे धृतराष्ट्रो(१)नराधिपः ।
एतत् कुरुष्व कौन्तेय ! ततः प्राप्स्यसि तत्फलम् ॥ ७१॥

अन्वयः—नराधिपः, धृतराष्ट्रः, पुत्रे, एतत्, कथितवान्, (तद्) हे कौन्तेय !, एतत्, कुरुष्व, ततः, तत्फलं, प्राप्स्यसि ।

व्याख्या—नराधिपः = मनुजेशः, धृतराष्ट्रः = एतन्नामकः, दुर्योधनपिता । पुत्रे = दुर्योधने, एतद् = पूर्वोक्तम्, सर्वम् । कथितवान् = उक्तवान् (तत् = तस्मात्) हे कौन्तेय ! = हे युधिष्ठिर!, एतद् = शीलम्, कुरुष्व = आचर, ततः = तदनन्तरम्, तत्फलम् = शीलशिक्षणरक्षणपरिणामम्, प्राप्स्यसि = लप्स्यसे ।

समासादि—नरेष्वधिपो नराधिपः । कुन्त्या अपत्यं पुमान् कौन्तेयस्तत्सम्बोधने हे कौन्तेय ! ।

व्याकरणम्—कथितवान् = कथ + क्तवतुः । कुरुष्व = कृ + लोट् । प्राप्स्यसि = प्र + आप् + लृट् ।

वाच्यान्तरम्—त्वयैतत् क्रियताम्, तत् फलं प्राप्स्यते ।

सारार्थः—धृतराष्ट्रस्तु दुर्योधनायैतदेव शीललक्षणमुक्तवान्, हे युधिष्ठिर ! एतत् त्वमपि विदित्वा शीलरक्षणं कुरु, ततस्तु तदलौकिकम् फलम् लप्स्यस इति ।

भाषाऽर्थः—महाराज धृतराष्ट्र ने अपने पुत्र से यह सब कहा था सो हे युधिष्ठिर ! तुम भी यह करो, इसके बाद इस का फल (जरूर) पावोगे, (ऐसा भीष्म पितामह ने युधिष्ठिर से कहा) ॥ ७१ ॥

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥१२४॥

इति मिथिलादेशान्तर्गतचयनपुरग्रामनिवासिना मिश्रोपनाम्ना श्रीगङ्गाधरशर्मणा विहिता भारतीयशीलनिरूपणाध्यायस्य सुधाऽऽख्यव्याख्या समाप्तिमगात् ।



(१) 'महीपतिः' इति वा पाठः । (व्याख्या—महीपतिः=भूपतिः, मह्याः पृथिव्याः पतिरधिपतिरिति)

# अथ महाभारतीयशीलनिरूपणाध्यायतः शिक्षाग्रहणम् ।

(१) सन्देह उपस्थिते विशेषज्ञः शत्रुरपि प्रष्टव्यः, यथेन्द्रेण भार्गवः प्रह्लादश्च ।
(२) प्रबलोऽपि रिपुरुपायतत्परेण पराजितो भवत्येव, यथेन्द्रेण प्रह्लादः ।
(३) उपस्थिते सन्देहे तद्विषयकः पूर्वापरेतिहासः स्मर्त्तव्यस्तेन तु स्वयं सन्देहनिवृत्तिर्भवति ।
(४) परेषामुन्नतिं दृष्ट्वा सज्जना मोदन्ते, दुर्जनाः खिद्यन्ते ।
(५) कस्यापि जनस्य ये ये चान्ये शत्रवः स्युस्तेषां मिथो मित्रत्वव्यवहाराभावेऽपि सहजा प्रीतिरुत्पद्यते ।
(६) दुष्टः समृद्धिसम्पन्नोऽपि सदैवासन्तुष्ट इव लक्ष्यते, यथा दुर्योधनः ।
(७) परेषामुन्नतिमवलोक्य महोन्नतिशीलोऽपि सङ्कुचितचित्तः खिद्यते, यथा दुर्योधनः ।
(८) ये धर्मात्मानः शीलशालिनो जनाः सन्ति, तान् प्रति स्वयं समुत्सुका कामिनीव लक्ष्मीर्गच्छति ।
(९) गुणज्ञचर्चाऽवसरे स्वशत्रुरपि यदि स्वस्माद्विशेषगुणवान् भवेत् तदा स चापि वर्णनीय एव, यथा गुरुणेन्द्राय शुक्रस्योत्कर्षः कथितः ।
(१०) नीचजात्युत्पन्नोऽपि चेदात्मनो विशेषज्ञस्तदा निःसङ्कोचं तत्समीपं गत्वा ततो गुणाः शिक्षणीयाः, यथा प्रह्लादनिकटे इन्द्रो गत्वा विद्यां लब्धवान् ।
(११) येन रूपेण, येन, स्वभावेन, येनोपचारेण च शिक्षकस्य दया श्रद्धा चोत्पद्यते, तथैव कर्त्तव्यम्, यथा विप्रवेषेण शिष्यभावेन विप्रानुकूलस्य प्रह्लादस्य निकटे देवेन्द्रो गत्वा विद्यामाप्तवान् ।
(१२) शिक्षकस्य ( गुरोः ) यदैवावकाशः, यदैव सुस्थिरं चित्तं मुदितञ्च, तदैव तत्समीपं गत्वा स्वजिज्ञासां निवेदयेद्, नहि तस्य स्वव्यग्रतया कार्यपातं कुर्याद्, एवं कृते स्थिरधीः सन्तुष्टश्च गुरुर्हृदयमुद्घाट्य शिक्षयति ।
(१३) यथा शुश्रूषवे शिष्याय गुरुर्विद्यां ददाति, नहि तथा धनदायापि ।
(१४) विप्रसेवानिरतं तद्वाक्यकारकमनिन्दकं धर्मात्मानं जितक्रोधं जितेन्द्रियं जनं स्वयं श्रीरुपैति ।
(१५) गुरुं सन्तोष्य लब्धा विद्या सफला भवति, नान्यथा सफलेति ।
(१६) अन्यो यत्करोति, तत्करोतु, स्वयमपकारप्रतीकारं न कुर्यात ।
(१७) यत्कर्म परेषां कल्याणकरं न, तत्स्वोपकारकारकमपि न कर्तव्यम् ।
(१८) येन क्रियमाणेन जनसंसदि प्रशंसा स्यात् तदवश्यं कार्यम् ।
(१९) यत्रैव शीलं ( सच्चरित्रम् ) वर्त्तते, तत्रैव सत्यवृत्तधर्मादयोऽपि प्रवर्त्तन्ते ।
(२०) स्नेहपरवशेनापि धर्मस्यैवोपदेशो दातव्यः, यथा धृतराष्ट्रो दुर्योधनाय ।
(२१) अनाचारेण परपीडया वा सञ्चितमपि धनं क्लेशपरिणामायैव ।
(२२) यदि तत्काले सदाचारेण सत्सङ्गेन च हानिरपि जायते, तथाऽपि, तस्मान्न विचलितो भवेद्, नियतमेव कदाऽपि सदाचारस्य फलं शर्म लभेत एवेति ।

इति ।

# अथ सटीकमूलरामायणे प्रश्नाः ।

(१) दशरथस्य राजधानी कासीदिति सप्रमाणं प्रदर्श्यताम् ।
(२) दशरथस्य कियत्यः स्त्रिय आसन्, तासु का ज्येष्ठा, का च कनिष्ठा ?
(३) दशरथस्य कति पुत्रास्तेषु जन्मनः पूर्वापरक्रमः कीदृशः ?
(४) कदा दशरथेन कैकेय्यै वरौ दत्तौ ?
(५) सीतारामलक्ष्मणानां पृथक् पृथक् प्रकृतिपरिचयं सप्रमाणं प्रदर्शय ।
(६) रामराज्योद्योगे भरतः कथं नाहूतो दशरथेन ?
(७) कस्मिन् देशे भरतस्य मातामहराजधानी आसीत् ? तथा किंनामासीत् ?
(८) विश्वामित्रस्याश्रमः कुत्रासीत्कथं च तेन निजाश्रमे समानीतौ रामलक्ष्मणौ ?
(९) संक्षेपेण रामस्य रूपगुणवर्णनं क्रियताम् ।
(१०) रावणो मारीचमेव कथं साहाय्यार्थं वरयामास ?
(११) खरदूषणादिभिर्लङ्केश्वरस्य कः सम्बन्धः ?
(१२) बलिनमपि वालिनं विहाय सुग्रीवेण सह रामो मैत्रीं कृतवान् इत्यत्र को हेतुः ?
(१३) कुत्रापि कैकेयी यवीयसी माता रामस्य, कुत्रापि 'मध्यमाऽम्बा' इति मिथो विरुद्धोपचारस्य कथं सङ्गतिः ?
(१४) भरतः कुत्र स्थितस्य रामस्य प्रत्यानयनाय गतवान् ?
(१५) रामलक्ष्मणप्रकृत्योः को भेदः ?
(१६) रामाय वनवासं दत्वा कैकेय्या जगत उपकारोऽपकारो वाऽऽकारि तत्सयुक्तिकं प्रदर्श्यताम् ?
(१७) सीतोत्पत्तिः कथमभूत्कथं च सीतेति नाम, तथा चेज्जनकस्यौरसी सुता सा नासीत्तदा कस्येति लिख्यताम् ।
(१८) रावणेन प्रेरितो मारीचः केन रूपेण रामदृष्टिगोचरं गतवान् ?
(१९) गङ्गाया उत्तरे वा सौम्ये तटे भरद्वाजस्याश्रम इति तत्रत्यवाक्यमुद्धृत्य लिख्यताम् ।
(२०) दण्डकारण्ये रामेण के के मुनयोऽवलोकिताः, तथा तेषु कतमेन किमपि दत्तं न वा ?
(२१) भरद्वाजेन वासार्थमुपदिष्टमपि चित्रकूटं कथं त्यक्तवान् रामः ?
(२२) रामलक्ष्मणौ यदा खरादीनां युद्धं गतौ, तदा सीता क्वासीत् ?
(२३) कबन्धः पूर्वजन्मनि कः, कथं कबन्धत्वमाप्तं तेन, एतद्विषये काऽपि पौराणिकी वार्त्ता लेख्या ?
(२४) कुत्र हनुमता रामः संगतः, तथा हनुमान् कृष्णमुखरक्तमुखयोर्वानरजात्योः क आसीत्?
(२५) किष्किन्धास्थं सुग्रीवं कथं न बाधते स्म वाली ?
(२६) कथं वालिसुग्रीवयोर्विरोध उत्पन्नः ?
(२७) सागरस्य विस्तृतिः कियती आसीत्तत्समूलं लिख्यताम् ?
(२८) लङ्कायां हनुमता कुत्र सीताऽवलोकिता ?
(२९) रामसुग्रीवाभ्यामनुपदिष्टमपि लङ्कादहनं कथमकारि हनुमता ?
(३०) सागरे सेतुः केनाकारि ?
(३१) कथं सीताया वह्निप्रवेशो रामेण कारितः ?
(३२) रामः कीदृशेन रथेन लङ्कातो निवृत्तः ?
(३३) रामे राज्यं प्रशासति प्रजाः कीदृश्य आसन् ?
(३४) रामेण कियत्कालं राज्यं कृतं, तत्सप्रमाणं लिख्यताम् ।
(३५) रामायणं चातुर्वर्ण्यपठनयोग्यं न वा ?

(३६) रामेण रावणं हत्वा लङ्काराज्यं कस्मै दत्तम् ?
(३७) तदानीं स्त्रीवर्गे युद्धशिक्षा प्रचलिताऽऽसीन्नवेति सप्रमाणमुल्लिख्यताम् ।
(३८) संक्षेपेण वाल्मीकेः पूर्वापरचरित्रं विलिख्यताम् ।
(३९) कौसल्याऽऽनन्दवर्धनो वा सुमित्राऽऽनन्दवर्धन इत्यत्र दशरथानन्दवर्धन इत्येव कथं न प्रयुक्तमादिकविना, किमस्य तत्त्वम् ?
(४०) यस्मिन् समये दशरथः प्राणं तत्याज, तदानीं रामः क्वासीत् ?
(४१) नन्दिग्रामस्त्वयोध्यायाः कस्यां दिशि कियति दूरे वर्त्तते ।
(४२) जनस्थाने कियन्ति रक्षांसि रामेण निहतानि ?
(४३) दशरथशूर्पणखयोः का व्युत्पत्तिः ?
(४४) कथं शूर्पणखाया नासाच्छेदनं कारितं रामेण ?
(४५) रघुवंश्यानां कः कुलगुरुरासीत्, सुमन्त्रः कश्चासीत् ?
(४६) गुहस्य का जातिः ? किं कर्म, क्व वसतिरित्यखिलं लिख्यताम् ?
(४७) निम्नलिखितानां पदानामर्था निर्दिश्यन्ताम्—
स्वाध्यायः, आत्मवान्, असूया, वशी, नियतात्मा, वाग्मी, महेष्वासः, संयत्, मन्त्री, यदृच्छा, संसद्, वागृषभः, तोरणम्, आहवः ।
(४८)
महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥
एताभ्यां श्लोकाभ्यां किं सूच्यते ?
(४९) "धनदेन समस्त्यागे सत्ये धर्म इवापरः"
कस्य विशेषणमेतद् ? व्याख्या चास्य कीदृशी ?
(५०) रामस्य चित्रकूटस्थितिमारभ्य लङ्कागमनं यावद् वृत्तान्तो विलिख्यताम् ।
(५१) लक्ष्मणस्य वने रामानुगमने को हेतुः ?
(५२) भरद्वाजशरभङ्गसुतीक्ष्णानामाश्रमः कुत्रासीत् ।
(५३) कुत्र कस्माच्च रामेण सुरपतिधनुः प्राप्तम् ?
(५४) "कबन्धं नाम रूपेण विकृतं घोरदर्शनम्"
व्याख्यायतामेतत् ।
(५५) "नु" "ह" अनयोः शब्दयोः कोऽर्थः ?
(५६) रामे वनमुपगते भरतः राज्यं चकार न वा ?
(५७) ऐच्छत्, चिक्षेप, दिदृक्षुः, प्रेत्य, ईयात् ।
एतानि पदानि साध्यन्ताम्, पदान्तरेण विव्रियन्ताञ्च ।

इति प्रश्नमाला समाप्ता ।

---

# महाभारतीयशीलनिरूपणाध्याये प्रश्नाः ।

(१) इमे जना नरश्रेष्ठ ! प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥
इत्यत्र 'नरश्रेष्ठ !' अनेन कस्य सम्बोधनम्, तथा च 'मे' अनेन कस्य ग्रहणम् ?
(२) किमपूर्वं विलोक्य दुर्योधनस्य हृदये खेद उत्पन्नः ?
(३) 'सभायां चाह वचनं तत्सत्र शृणु भारत !' इत्यत्र 'भारत' अनेन कस्य सम्बोधनं केन च कृतमस्ति, तद्विविच्य प्रदर्श्यताम् ।
(४) 'भवतस्तां सभां दृष्ट्वा' इत्यत्र 'ताम्' अनेन कां कीदृशीं वा सभामुद्दिश्योक्तम् ?
(५) पाण्डवैर्दुर्योधनस्य कः सम्बन्धः, पाण्डवदुर्योधनयोः कौ विग्रहौ ?
(६) ज्येष्ठे धृतराष्ट्रे सत्यपि कथं कनीयान् पाण्डु राज्येऽधिरोपितः ?
(७) के के पाण्डवाः, के के च कौरवा उच्यन्ते ?
(८) संक्षेपेण भीष्मपरिचयः प्रदर्श्यताम् ?
(९) सर्वे पाण्डवाः सोदरा वा न ? चेन्न, तर्हि कस्याः के के तनया अभूवन्निति ? ब्रूहि ।
(१०) पुंस्त्वहीने पाण्डौ कथं पञ्च पुत्रा जातास्तत्तत्त्वं प्रदर्श्यताम् ?
(११) दुर्योधनमातुर्नाम किं ? तस्याः साधारणपरिचयोऽपि दातव्यः ?
(१२) कर्णः कः, तेन च दुर्योधनस्य कः सम्बन्ध आसीत्, तेन तस्य कीदृशो मिथो व्यवहारः ।
(१३) महाभारतसमये क्षत्रियाणां मांसाशनं विधेयमासीन्न वा ? चेदासीत्तदा तत्सप्रमाणं प्रदर्शनीयम् ?
(१४) युधिष्ठिरमहानसे कियन्तो ब्राह्मणा नित्यं भुञ्जते स्म ?
(१५) मान्धातृ-जनमेजय-नाभागनरपतीनां नामान्यस्मिन्नध्यायेऽत्रलोकितानि चेत्तदा तेषां संक्षेपेण परिचयः प्रदर्शनीयः ।
(१६) शीलं नाम किम्, तल्लक्षणमत्र किं निदर्शितं प्रह्लादेन, तत्सम्यग्दर्शनीयम् ।
(१७) कथमिन्द्रः प्रथमं बृहस्पतिमेवापृच्छत् ?
(१८) कथमिन्द्रेण स्वशत्रोः प्रह्लादस्य निकटं गत्वा विद्याऽधिगता, अनेन काऽपि शिक्षा गृहीता भवता ?
(१९) कस्य बलेन प्रह्लादस्त्रैलोक्यराज्यं प्राप्तवान् ?
(२०) प्रह्लादस्य भार्गवेण कः सम्बन्धः ?, तयोः परिचयं च प्रदर्श्य प्रह्लादीया राजनीतिर्लेख्या ?
(२१) प्रह्लादो विप्रसेवको वा विप्रविरोधी आसीत् तत्सप्रमाणं प्रदर्श्यताम् ?
(२२) किं नाम भुवि अमृतं विद्यते ?
(२३) प्रह्लादो दैत्यो वा देव आसीत्तथा स कस्य पुत्र इति च प्रदर्श्यताम् ?
(२४) शीले प्रह्लादशरीरान्निर्गते धर्मादयोऽपि निर्गता इत्यनेन भवता का शिक्षा गृहीता ?
(२५) इन्द्रः केन वेषेण प्रह्लादसमीपं विद्यालाभाय गतवान् ?
(२६) कथं प्रह्लादः स्वशत्रवे इन्द्राय स्वसामर्थ्यमूलं शीलमुपदिष्टवान् ?
(२७) यद्यप्यशीला नृपते ! प्राप्नुवन्ति श्रियं क्व चित् ।
न भुञ्जते चिरं तात ! समूलाश्च न सन्ति ते ॥
इत्यस्य का सती व्याख्या ?
(२८) भीष्मः कथं कौरवाणां पाण्डवानां च पितामह इति ?
(२९) भीष्मस्य के के तनया इति लिख्यताम्
(३०) अयं शीलनिरूपणाध्यायः कुत्रत्यः, तथा चास्मात् काः काः शिक्षा गृहीताः ?
(३१) किं नाम शीलम्, तत्प्राप्त्युपायो धृतराष्ट्रेण कः प्रदर्शितः ?

(३२) धर्म सत्यं तथा वृत्तं बलं चैव तथाऽप्यहम् ।
शीलमूला महाप्राज्ञ ! सदा नास्त्यत्र संशयः ॥
श्लोकोऽयं सन्दर्भपुरःसरं व्याख्येयः ।

(३३) दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥
दृष्ट्वा तां पाण्डवेयानामृद्धिं वैश्रवणीं शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि भारत ! ॥
श्लोकाविमौ कोशविग्रहप्रदर्शनपुरःसरं व्याख्येयौ ।

(३४) पूर्व के तादृशाः शीलवन्तोऽभवन् येषां स्वयमेव वसुन्धरा वशं समागता ? ।

(३५) देवराजाय बृहस्पतिना किंरूपं श्रेय उपदिष्टमिति स्फुटं विलेख्यम् ।

(३६) प्रह्लादेन त्रैलोक्यराज्यलाभकथा यथा विप्ररूपायेन्द्राय कथिता तत्सारांशः सरलसंस्कृतभाषया लिख्यताम् ।

(३७) तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति ।
तेजो विग्रहवत्तात ! शरीरमजहात् तदा ॥

(३८) यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत् कुर्यात् कथञ्चन ॥

(३९) यद्यप्यशीला नृपते ! प्राप्नुवन्ति श्रियं क्व चित् ।
न भुञ्जते चिरं तात ! समूलाश्च न सन्ति ते ॥

(४०) अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥

(४१) सोऽयं वागग्रविद्यानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥

(४२) आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥
एते श्लोकाः सन्दर्भकोशविग्रहप्रदर्शनपूर्वं व्याख्येयाः ॥

(४३) सभ्रातृकस्य । चिन्तयतः । महाद्युति । आजानेयाः । अपत्रपेत । प्रशस्यते । आच्छादयसि । एतेषां शब्दानां साधुता प्रदर्श्यताम् ।

इति

## मेघदूतम्—

### सञ्जीविनी-चारित्रवर्द्धिनी-भावप्रबोधिनी टीकात्रय सहितम् ।

सञ्जीविनी टीकाके साथ चारित्रवर्द्धिनी तथा साहित्याचार्य पं० श्रीनारायणशास्त्री खिस्तेकृत परीक्षोपयोगि भावप्रबोधिनीटीका एक साथ छप जानेसे विद्यार्थियों की समस्त कठिनाईयां दूर हो गई हैं । मूलश्लोक, सञ्जीविनी—चारित्रवर्द्धिनी टीका के भावों को स्पष्ट तथा सरलता पूर्वक भावप्रबोधिनी टीका में समझाया गया है । आज तक मेघदूत ३ टीका सहित का इतना उत्तम परीक्षोपयोगि संस्करण दूसरा नहीं छपा । मूल्य भी लागत मात्र बहुत ही अल्प सजिल्द संस्करण का ॥=)

तथा अजिल्द संस्करणका ॥)

## मुक्तावली—शब्दखण्डः ।

न्याय-व्याकरण-साहित्याचार्य-मीमांसकशिरोमणि पं० श्रीसूर्यनारायणशुक्ल रचित परीक्षोपयोगी मयूखटीका तथा भाषाटीका सहित। मयुखटीका के साथ २ भाषाटीका हो जाने से साहित्य मध्यमा के विद्यार्थियोंके लिए अपूर्व पुस्तक होगई है । इससे उत्तम परीक्षोपयोगि मुक्तावली शब्दखण्ड का संस्करण दुसरा नहीं । मूल्य अल्प ।)

## वृत्तरत्नाकरः—

### नारायणीटीका तथा बैजनाथशास्त्री वरकलेकृत परीक्षोपयोगि टिप्पणी। उदाहरण तथा श्रुतबोध-छन्दोमञ्जरी सुवृत्तितिलक सहितः ।

यों तो वृत्तरत्नाकर के आज तक अनेक संस्करण छप चुके हैं लेकिन हम प्रतिज्ञा के साथ लिखते हैं कि इस संस्करण के समान दुसरा कोई भी संस्करण परीक्षोपयोगि नहीं है । मूल्य लागत मात्र १॥)

प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

**चौखम्बा संस्कृत सीरिज़ आफिस,**

विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,

बनारस सिटी ।

# गणितकौमुदी

## ( हिन्दीभाषाटीकाप्रश्नपत्रसहिता )

### ( प्रथमपरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम् । )

अत्यन्त हर्ष का विषय है कि सीर्फ थोडे ही दिनों में "गणितकौमुदी" का प्रथम संस्करण हाथों हाथ विक्री हो जाने से अनेक आवश्यक विषयों के प्रवेश से संशोधित तथा परिवर्द्धित द्वितीय संस्करण भी छप कर प्रस्तुत हो गया और जिसे हम अपने प्रिय पाठकों के करकमलों में समर्पण करने का सुअवसर प्राप्त कर रहे हैं।

गवर्नमेण्ट संस्कृत कालेज बनारस की प्रथमा परीक्षा में निर्द्धारित गणित का यह "गणितकौमुदी" का संग्रह बहुत ही उपयोगि हुआ है। प्रस्तुत ग्रन्थ में संख्या की उत्पत्ति, गणनक्रम, जोड़, बाकी, गुणा, भाग, आदि विषयों के लक्षण तथा अभ्यास के लिये भिन्न २ प्रकार के अनेक उदाहरण, देश काल भेदसे अनेक प्रकार के मान, तथा भिन्न २ परिभाषायें भी रक्खी गयी हैं। इस द्वितीय संस्करण में प्रथम संस्करण की अपेक्षया बहुत से विषय नवीन सन्निविष्ट किये गये हैं। गणितशास्त्र में अङ्कों के बारे में जो कुछ विशिष्ट सिद्धान्त हैं जिनको कि गणित शास्त्र के धुरन्धर विद्वान् हो जानते हैं वे विषय भी अत्यन्त सरल भाषा में उदाहरण सहित इस संस्करण में रक्खे गये हैं तथा अङ्कों के सङ्केत भी सोदाहरण दिये गये हैं। पारिभाषिक शब्दों का विवरण भी साथमें दे दिया गया है। केवल एक इसी ग्रन्थ का अच्छी तरह अभ्यास करने से परीक्षा में तो सफलता होगी ही, व्यावहारिक जगत् में भी सब प्रकार के हिसाबों का सामान्य ज्ञान होगा, तथा संस्कृत के छात्रों पर व्यवहारानुपयोगिता का जो कलङ्क लगाया जाता है वह भी अंशतः मिट जायगा।

जो छात्र आगे मध्यमा परीक्षा में ज्यौतिष विषय लेना चाहें, उनको भी इस ग्रन्थ के अभ्यास से अग्रिम पाठ्यग्रन्थों की तैयारी में बहुत सहायता मिलेगी।

प्रथमा परीक्षा के विद्यार्थियों के लिए यह पुस्तक कितनी सरल तथा परीक्षा में सफलता प्राप्त होने योग्य हुई इसका सबसे उत्तम प्रमाण प्रथम संस्करण छपते ही हाथों हाथ विक्री हो जाना, तथा जिस २ विद्यार्थियों ने इस पुस्तक को अध्ययन कर परीक्षा दी उन्हें परीक्षा में पुरी सफलता प्राप्त करना ही है काशी तथा अन्य स्थानों के अनेक विद्वानों ने इस ग्रन्थ से पूर्ण सहानुभूति रखते हुए अनेक प्रमाण पत्र भी दिए हैं।

ग्रन्थ अत्यन्त उत्तम अक्षरों तथा सुन्दर मोटे कागज पर साफ छपा है।

मूल्य भी लागत मात्र ।=) छः आना रक्खा है।

## चन्द्रालोकः—शरदागमव्याख्या सहितः ।

इसके संपादक साहित्याचार्य पं० श्रीनारायणशास्त्री खिस्ते जी हैं। टीका छोटी होते हुए भी मूल के भावों को स्पष्ट समझाती है इस लिए विद्यार्थियों के बड़े उपयोग की है।

मूल्य लागत मात्र ॥=)

प्राप्तिस्थानम्–श्रीहरिकृष्णनिबन्धभवनम्, बनारस सिटी

# छन्दः कौमुदी ।

## ( हिन्दीभाषाटीकाप्रश्नपत्रसहिता )

### ( प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहरूपा )

बनारस गवर्नमेंट संस्कृत कालेजकी प्रथम परीक्षा में निर्द्धारित छन्दों ... यह बहुत ही उपयोगी हुआ है । इसमें छन्दः शास्त्र प्रणेताओंका सम्प्रदा... सहित विशदरूपसे दिखाया गया है, तथा गुरु लघु नियम, यति ... आवश्यक विषय भी सप्रमाण विस्तार से कहे गये हैं । साथमें विस्तृत ...मिका ... है, जिसमें छन्दः शास्त्रका सामान्य और विशेष रूप, तथा छन्दःशास्त्र ... इतिहास भी दिया गया है । प्रत्येक छन्दोंके लक्षण पिङ्गलसूत्र, वृत्तरत्नाकर, ...र छन्दोमञ्जरीसे दिये गये हैं, तथा श्रुतबोधके लक्षणोंमें योग्य परिवर्त्तनकर ... भी दिये गये हैं । इस संग्रहमें दूसरे पुस्तक प्रकाशकों द्वारा प्रकाशित संग्र... बहुत कुछ अधिकता तथा नवीनता भी है, जिसका अनुभव प्रत्यक्ष ...ने से होगा । अधिक क्या कहें, पुस्तक सर्वथा विद्यार्थियोंके उपयुक्त है । इतने पर भी मूल्य बहुत अल्प लागत मात्र ।=) छः आना रक्खा है ।

इस ग्रन्थ का यह द्वितीय संस्करण बहुत उपयोगी हुआ है क्योंकि इसमें कुछ आवश्यक प्रश्नों का समावेश किया गया है और ग्रन्थ उपस्थित करने का सरल उपाय भी दिखाया गया है । हम निश्चय से कह सकते हैं कि उक्त प्रकार से उक्त प्रश्नों की उपस्थिति करने से छात्रों के लिये परीक्षा में छन्दों के प्रश्नों का उत्तर लिखना बहुत सहल होगा और साथही साथ ग्रन्थ की तैयारी भी अच्छी तरह से हो जायगी । प्रत्येक प्रथम परीक्षार्थि छात्र को इस द्वितीय संस्करण की एक प्रति अवश्य अपने पास रखना चाहिये ।

प्रथमा परीक्षा के विद्यार्थियों के लिए यह पुस्तक कितनी सरल तथा परीक्षा में सफलता प्राप्त होने योग्य हुई इसका सबसे उत्तम प्रमाण प्रथम संस्करण छपते ही हाथों हाथ बिक्री हो जाना, तथा जिस २ विद्यार्थियों ने इस पुस्तक को अध्ययन कर परीक्षा दी उन्हें परीक्षा में पुरी सफलता प्राप्त करना ही है काशी तथा अन्य स्थानों के अनेक विद्वानों ने इस ग्रन्थ से पूर्ण सहानुभूति रखते हुए अनेक प्रमाण पत्र भी दिए हैं ।

## रघुवंशमहाकाव्यम्—सुधानाम्निव्याख्या सहितम् ।

प्रत्येक श्लोक में क्रमशः अवतरण-श्लोक, सञ्जीविनी-अन्वयः-"सुधाव्याख्या"-कोशः-समासादि-व्याकरण-वाच्यपरिवर्तन-तात्पर्यार्थः-हिन्दीभाषार्थः तथा जहां तहां पौराणकीयकथायें-उपयुक्त टीप्पणीयां-संक्षिप्तकथायें आदि उपयुक्त विषय दिये हैं तथा ग्रन्थ समाप्ति में परीक्षोपयोगि प्रश्नपत्र भी दिये गये हैं आज तक इतनी उत्तम परीक्षोपयोगि टीकायें तथा मल्लिनाथ कृत सञ्जीविनी टीका सहित का रघुवंश अन्यत्र नहीं छपा । १ से ९ सर्ग का मूल्य लागत मात्र १॥)

उपरोक्त "सुधाव्याख्या" सहित रघुवंश १ से ४ सर्ग का मूल्य १।

तथा ६ से १० सर्ग का मूल्य १॥) पृथक् २ संस्करण भी मिलता है

---

प्राप्तिस्थानम्—श्रीहरिकृष्णनिबन्धभवनम्, बनारस सिटी